॥ ओ३म् ॥

# व्याख्यानमाला



अर्थात्

विषयानुक्रमोक्तेश्वरधर्मविद्यादिविविध
विषयबोधकवेदशास्त्रादिसद्वाक्यानां
संग्रहात्मको ग्रन्थः ।

स च

श्रीमत्परमहंसपरिव्राजकाचार्य पण्डित स्वामी
अच्युतानन्द-सरस्वतीति नामधेयैः संग्रहीतः ।



विदुषां सज्जनानामाशंसनमिदम् ।

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग्भवेत् ॥१॥

---

सन् १९२७

संवत् १९८३ ]          [ सप्तमीवार पुस्तक संख्या १०००



लवपुरीय
हिन्दी प्रेस नामक मुद्रणालये मुद्रितः ।

# भूमिका

मान्य विवेकी पाठक वर्ग !

यह व्याख्यान माला पुस्तक, जिस में अनेक वेद, उपनिषद्, स्मृति, महाभारत, रामायण पुराणादि ग्रन्थों के प्रमाण विद्यमान हैं, आप लोगों की भेंट किया जाता है। इन के वचनों को पढ़ें और लाभ उठाएं।

प्रभु-भक्ति, वेद आदि शास्त्रों के स्वाध्याय और ब्रह्मचर्य आदि अच्छे २ साधनों के विना इस आर्यवर्त की दशा बिगड़ रही है। इसे सुधारने का प्रयत्न करें। ईश्वर भक्ति, स्वाध्याय और ब्रह्मचर्य आदि साधनों के विना और किसी प्रकार से यह देश और जाति नहीं उठ सकेगी। इस पुस्तक से आप को इस प्रयोजन के लिये बहुत लाभदायक वचन मिलेंगे, जो आप के स्वाध्याय करने और उपदेश करने के कार्य में बहुत काम आयंगे। इसके उपदेश द्वारा आप देश की दशा को सुधार सकेंगे। इस पुस्तक के बनाने का मेरा प्रयोजन यही है कि एक ही विषय पर भिन्न २ ग्रन्थों तथा शास्त्रों के प्रमाण एक ही स्थान पर आप को मिल जांए, ताकि देश और जाति के सुधार के काम में आप को सुभीता हो जाय और धर्म का किसी प्रकार प्रचार हो सके। यदि आप इस पुस्तक को पढ़कर इस के अनुकूल धर्म का प्रचार करेंगे, तो मैं अपने बहुत वर्षों के प्रयत्न को सफल समझूंगा। वेदादि शास्त्र बहुत विशाल पुस्तक पड़े हैं, जिन का पढ़ना तथा विचारना बहुत वर्षों का काम है। यह लघु पुस्तक थोड़े समय में अच्छी प्रकार विचारा जासकता है।

कृपा करके आप लोग ईश्वर भक्ति, स्वाध्याय और ब्रह्मचर्य आदि उत्तम साधनों को संसार भर में फैलाएं। यह पुस्तक इसी अभिप्राय के लिये लिखी गई है किसी मत मतान्तर के खण्डन के लिये नहीं लिखी गई।

महात्मा, साधु, संन्यासियों और उपदेशक महानुभावों के लिये यह पुस्तक अत्यन्त उपयोगी है। इसमें ५२ विषय हैं। जिस विषय पर आप ने व्याख्यान देना हो, या लेख लिखना हो, उस विषय के वचनों को आप थोड़ी देर देख लें, फिर आप देखेंगे कि आपको कितनी सहायता मिलती है। मुझे दृढ़ आशा है कि इस पुस्तक से संन्यासी, उपदेशक, ब्रह्मचारी और विद्यार्थी बहुत लाभ उठायेंगे। यह पुस्तक आर्यसमाजी, सनातनधर्मी, ब्रह्मसमाजी अर्थात् सब ईश्वर विश्वासियों के लिये उपयोगी है।

ऐसा उपयोगी पुस्तक सातवीं वार आर्य प्रादेशिक प्रतिनिधि सभा पञ्जाब सिंध बलोचिस्तान लाहौर ने प्रकाशित कराया है। जिस सभा की छत्रछाया में अनेक आर्यसमाज, कई कालिज, स्कूल और कन्यापाठशालाएं तथा अनाथालायें चल रहे हैं। जिस सभा के प्रधान श्री महात्मा हंसराज जी हैं और जो वैदिक धर्म तथा आर्य जाति की वर्षों से निष्काम सेवा करते हुए वृद्ध हो गए हैं। मेरी आप से यही प्रार्थना है कि आप इस पुस्तक को विचार कर इस का अच्छी प्रकार से उपयोग करें।

आपका शुभ चिन्तक,

९ माघ
सँवत् १९८३

स्वामी अच्युतानन्द सरस्वती।

# व्याख्यानमालाया विषयानुक्रमः ।

ओ३म्

# व्याख्यानमाला।

## परमेश्वर-प्रार्थनादि

सख्ये त इन्द्र वाजिनो मा भेम शवसस्पते। त्वामभिप्रणोनुमो जेतारमपराजितम् ॥१॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः। येषां हृदिस्थो भगवान्मङ्गलायतनो हरिः ॥२॥ सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम्। येषां हृदिस्थो भगवान्मङ्गलायतनो हरिः ॥३॥ अशुभानि निराचष्टे तनोति शुभसन्ततिम्। स्मृतिमात्रेण यत्पुंसां ब्रह्म तन्मङ्गलं विदुः ॥४॥ स्मृतेः सकलकल्याणभाजनं यस्य जायते। पुरुषस्तमजं नित्यं व्रजामि शरणं हरिम् ॥५॥ हिरण्मये परे कोशे विरजे ब्रह्म निष्कलम्। तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ॥६॥ जगतां यदि नो कर्ता कुलालेन विना घटः। चित्रकारं विना चित्रं स्वत एव भवेत्तदा ॥ ७ ॥ भयादस्याग्निस्तपति भयात्तपति सूर्यः। भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥ ८ ॥ एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते। दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥९॥ दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः। अप्राणा ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥ १० ॥ एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं

वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥११॥ यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः। तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते ॥१२॥ सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि। संपश्यन् ब्रह्म परमं याति नान्येन हेतुना ॥ १३ ॥ स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्। स एव विष्णुः स प्राणः स कालोग्निः स चन्द्रमाः ॥१४॥ एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम्। इन्द्रमेकेऽपरे प्राणमपरे ब्रह्म शाश्वतम् ॥१५॥ यो देवोऽग्नौ योऽप्सु यो विश्वं भुवनमाविवेश। य ओषधिषु यो वनस्पतिषु तस्मै देवाय नमो नमः ॥१६॥ अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः। वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥१७॥ अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्। अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते ॥१८॥ एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति। तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥ १९ ॥ नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्। तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ॥२०॥ य एकोऽवर्णो बहुधा शक्तियोगाद्वर्णाननेकान्निहितार्थो दधाति। विचैति चान्ते विश्वमादौ स देवः स नो बुद्ध्या शुभया संयुनक्तु ॥२१॥ अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृज-

मानां सरूपाः। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्त-
भोगामजोऽन्यः ॥२२॥ द्वा सुपर्णा सयुजा सखाया समानं
वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो
अभिचाकशीति ॥२३॥ समाने वृक्षे पुरुषो निमग्नोऽनीशया
शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमान-
मिति वीतशोकः ॥२४॥ यदा पश्यः पश्यते रुक्मवर्णं कर्तार-
मीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय नि-
रञ्जनः परमं साम्यमुपैति ॥ २५ ॥ बृहच्च तद्दिव्यमचिन्त्य-
रूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति। दूरात्सुदूरे तदिहान्तिके
च पश्यत्स्विहैव निहितं गुहायाम् ॥ २६ ॥ नायमात्मा बल-
हीनेन लभ्यो न च प्रमादात्तपसो वाप्यलिङ्गात्। एतैरुपायैर्य-
तते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम ॥२७॥ स एव
काले भुवनस्यास्य गोप्ता विश्वाधिपः सर्वभूतेषु गूढः। यस्मि-
न्युक्ता ब्रह्मर्षयो देवताश्च तमेवं ज्ञात्वा मृत्युपाशांश्छिनत्ति
॥२८॥ यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामो-
षधयः संभवन्ति। यथा सतः पुरुषात्केशलोमानि तथाऽक्षरा-
त्संभवतीह विश्वम् ॥ २९ ॥ स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः
कालकालो गुणी सर्वविद्यः। प्रधानक्षेत्रज्ञपतिर्गुणेशः संसार-
मोक्षस्थितिबन्धहेतुः ॥ ३० ॥ यो ब्रह्माणं विदधाति पूर्वं यो
वै वेदांश्च प्रहिणोति तस्मै। तं ह देवमात्मबुद्धिप्रकाशं मु-
मुक्षुर्वै शरणमहं प्रपद्ये ॥३१॥ नमस्ते सते ते जगत्कारणाय

नमस्ते चिते सर्वलोकाश्रयाय । नमोऽद्वैततत्वाय मुक्तिप्रदाय नमो ब्रह्मणे व्यापिने शाश्वताय ॥३२॥ त्वमेकं शरण्यं त्वमेकं वरेण्यं त्वमेकं जगत्पालकं स्वप्रकाशम् । त्वमेकं जगत्कर्तृपातृ प्रहर्तृ त्वमेकं परं निश्चलं निर्विकल्पम् ॥३३॥ भयानां भयं भीषणं भीषणानां गतिः प्राणिनां पावनं पावनानाम् । महोच्चैः पदानां नियन्तृ त्वमेकं परेषां परं रक्षणं रक्षणानाम् ॥३४॥ वयन्त्वां स्मरामो वयन्त्वां भजामो वयन्त्वां जगत्साक्षिरूपं नमामः । सदेकं निधानं निरालम्बमीशं भवाम्भोधिपोतं शरण्यं व्रजामः ॥ ३५ ॥ विदु र्यं न चित्तेन्द्रियाणीन्द्रियेशं विजनाति यस्तानि नित्यं नियन्ता । जगत्साक्षिणं व्यापकं विश्ववन्द्यं चिदानन्दरूपं तमीशं प्रपद्ये ॥३६॥ अणोरप्यणीयान्महद्भ्यो महीयान् रवीन्दुग्रहज्याभगोलादिकर्ता । य ईशो हि सृष्ट्यादिमध्यान्तसंस्थश्चिदानन्दरूपं तमीशं प्रपद्ये ॥ ३७ ॥ वशे यस्य विश्वं समस्तं सदाऽऽस्ते यदाभासतो भाति यद्वै विचित्रम् । न जानन्ति यन्तत्वतो योगिनोऽपि चिदानन्दरूपन्तमीशं प्रपद्ये ॥ ३८ ॥ त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च सखा त्वमेव । त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देवदेव ॥३९॥ तमीश्वराणां परमं महेश्वरन्तन्देवतानां परमञ्च दैवतम् । पतिम्पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम् ॥ ४० ॥ एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता

केवलो निर्गुणश्च ॥४१॥ अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः। स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ॥ ४२ ॥ अणोरणीयान्महतो महीयानात्माऽस्य जन्तोर्निहितो गुहायाम्। तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः ॥४३॥ न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। पराऽस्य शक्तिर्विविधैव श्रूयते स्वभाविकी ज्ञानबलक्रिया च ।४४। न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम्। स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः ॥४५॥ न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ ४६ ॥ नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम् ॥४७॥ न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्। हृदा हृदिस्थं मनसा य एनमेवं विदुरमृतास्ते भवन्ति ॥४८॥ भूः पादौ यस्य खञ्चोदरमसुरनिलश्चन्द्रसूर्यौ च नेत्रे कर्णावाशा शिरो द्यौर्मुखमपि दहनो यस्य वास्तव्यमब्धिः। अन्तस्थं यस्य विश्वं सुरनरखगगोभोगिगन्धर्वदैत्यैश्चित्रं रंरम्यते तन्त्रिभुवनवपुषं विष्णुमीशं नमामि ॥४९॥ सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥५०॥ पूर्ण-

मदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ ५१ ॥

## धर्मवर्णनम् ॥२॥

सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः । सुखञ्च न विना धर्मात्तस्माद्धर्मपरो भवेत् ॥ १ ॥ धर्मं शनैः संचिनुयाद्वल्मीकमिव पुत्तिकाः । परलोकसहायार्थं सर्वभूतान्यपीडयन् ॥२॥ नामुत्र हि सहायार्थं पिता माता च तिष्ठतः । न पुत्रदारा न ज्ञातिर्धर्मस्तिष्ठति केवलः ॥३॥ एकः प्रजायते जन्तुरेक एव प्रलीयते । एको नु भुङ्क्ते सुकृतमेक एव च दुष्कृतम् ॥ ४ ॥ एकः पापानि कुरुते फलं भुङ्क्ते महाजनः । भोक्तारो विप्रमुच्यन्ते कर्ता दोषेण लिप्यते ॥५॥ मृतं शरीरमुत्सृज्य काष्ठलोष्ठसमं क्षितौ । विमुखा बान्धवा यान्ति धर्मस्तमनुगच्छति ॥६॥ तस्माद्धर्मं सहायार्थं नित्यं संचिनुयाच्छनैः । धर्मेण हि सहायेन तमस्तरति दुस्तरम् ॥ ॥७॥ एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः । शरीरेण समं नाशं सर्वमन्याद्धि गच्छति ॥ ८ ॥ धनानि भूमौ पशवश्च गोष्ठे भार्या गृहद्वारि जनः श्मशाने । देहश्चितायां परलोकमार्गे कर्मानुगो गच्छति जीव एकः ॥९॥ धर्मे मतिर्भवतु वः सततोत्थितानां स ह्येक एव परलोकगतस्य बन्धुः । अर्थाः स्त्रियश्च निपुणैरपि सेव्यमाना नैवाप्तभावमुपयान्ति

न च स्थिरत्वम् ॥१०॥ वने रणे शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा। सुप्तं प्रमत्तं विषमस्थितं वा रक्षन्ति पुण्यानि पुरा कृतानि ॥ ११ ॥ सकलाऽपि कला कलावतां विकला पुण्यकलां विना खलु। सकले नयने वृथा यथा तनुभाजां हि कनीनिकां विना ॥ १२ ॥ युवैव धर्मशीलः स्यादनित्यं खलु जीवितम्। को हि जानाति कस्याद्य मृत्युकालो भविष्यति ॥१३॥ जीवन्तं मृतवन्मन्ये देहिनं धर्मवर्जितम्। मृतो धर्मेण संयुक्तो दीर्घजीवी न संशयः ॥१४॥ अजरामरवत्प्राज्ञो विद्यामर्थञ्च चिन्तयेत्। गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥ १५॥ उत्थायोत्थाय बोद्धव्यं किमद्य सुकृतं कृतम्। आयुषः खण्डमादाय रविरस्तं गमिष्यति ॥ १६ ॥ अस्थिरं जीवितं लोके ह्यस्थिरे धनयौवने। अस्थिराः पुत्रदाराश्च धर्मः कीर्तिर्द्वयं स्थिरम् ॥१७॥ मुहूर्तमपि जीवेच्च नरः शुक्लेन कर्मणा। न कल्पमपि पापेन लोकद्वयविरोधिना ॥ १८ ॥ यौवनं जीवितं चित्तञ्छाया लक्ष्मीश्च स्वामिता। चञ्चलानि षडेतानि ज्ञात्वा धर्मरतो भवेत् ॥ १९ ॥ सर्वमात्मनि संपश्येत्सच्चासच्च समाहितः। सर्वमात्मनि संपश्यन्नाधर्मे कुरुते मनः ॥२०॥ दिवसेनैव तत्कुर्याद्येन रात्रौ सुखं वसेत्। अष्टमासेन तत्कुर्याद्येन वर्षाः सुखं वसेत् ॥२१॥ पूर्वे वयसि तत्कुर्याद्येन वृद्धः सुखं वसेत्। यावज्जीवेन तत्कुर्याद्येनामुत्र सुखं वसेत् ॥२२॥ धर्म एव प्लवो नान्यः स्वर्गं द्रौपदि गच्छताम्। सैव नौः साग-

रस्येव वणिजः पारमिच्छतः ॥ २३ ॥ अफलो यदि धर्मः स्याच्चरितो धर्मचारिभिः । अप्रतिष्ठे तमस्येतज्जगन्मज्जेद-निन्दिते ॥ २४ ॥ वेदः स्मृतिः सदाचारः स्वस्य च प्रिय-मात्मनः । एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥२५॥ श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन्हि मानवः । इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ॥ २६ ॥ सुखितस्य दुःखितस्य च संसारे धर्म एव तव कार्यः । सुखितस्य तदभिवृद्ध्यै दुःख-भुजस्तदुपघाताय ॥२७॥ येषां च बहवः शूरा ज्ञातयो धर्म-माश्रिताः । ते जीवन्ति सुखं लोके कर्षन्ति च महद्यशः ॥२८॥ विद्या रूपं धनं शौर्य्यं कुलीनत्वमरोगता । राज्यं स्वर्गश्च मोक्षश्च सर्वं धर्म्माद्वाप्यते ॥ २९ ॥ शक्तिमानप्यशक्तोऽसौ धनवानपि निर्धनः । श्रुतवानपि मूर्खश्च यो धर्मविमुखो नरः ॥३०॥ धर्मादपेतं यत्कर्म यद्यपि स्यान्महाफलम् । न तत्से-वेत मेधावी नहि तद्धितमुच्यते ॥ ३१ ॥ न हर्तव्यं परधनं धर्म्म एष सनातनः । मन्यन्ते बलवन्तस्तं दुर्बलैः संप्रकीर्तितम् ॥३२॥ न ह्यत्यन्तं बलवन्तो भवन्ति सुखिनोऽपि वा । तस्माद नार्जवे बुद्धिर्न कार्या ते कदाचन ॥ ३३ ॥ दातव्यमित्ययं धर्म्म उक्तो भूतहिते रतैः । तं मन्यन्ते धनयुताः कृपणैः संप्रवर्तितम् ॥ ३४ ॥ यदा नियतिकार्पण्यमर्थैषामेव रोचते । न ह्यत्यन्तं धनवन्तो भवन्ति सुखिनोऽपि वा ॥३५॥ वेदो-दितं स्वकं कर्म्म नित्यं कुर्य्यादतन्द्रितः । तद्धि कुर्वन्यथा-

शक्ति प्राप्नोति परमां गतिम् ॥ ३६ ॥ धर्मो माता पिता चैव धर्मो बन्धुः सुहृत्तथा । धर्मः स्वर्गस्य सोपानं धर्मात्स्वर्गमवाप्यते ॥३७॥ आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥३८॥ केवलं धर्ममाश्रित्य न कार्यो धर्मनिर्णयः । युक्तिहीनविचारेतु धर्महानिः प्रजायते ॥३९॥ ये सन्तुष्टाः श्रुतिपरा महात्मानो महाबलाः । धर्म्यं पन्थानमारूढास्तानुपास्स्व पृच्छ च ॥४०॥ अवधार्य मतं तेषां बुधानां धर्मदर्शिनाम् । नियच्छ परया बुद्ध्या चित्तमुत्पथगामि वै ॥४१॥ मनो हि सर्वभूतानां सन्तनोति शुभाशुभम् । अशुभेभ्यस्तदाक्षिप्य शुभेऽर्थे चावधारय ॥४२॥ सोपानभूतं स्वर्गस्य मानुष्यं प्राप्य दुर्लभम् । तथात्मानं समाधत्स्व भ्रश्यसे न पुनर्यथा ॥ ४३ ॥ आनृशंस्यमहिंसा चाप्रमादः संविभागिता । श्राद्धकर्मातिथेयञ्च सत्यमक्रोध एव च ॥ ४४ ॥ स्वेषु दारेषु सन्तोषः शौचं नित्यानुसूयता । आत्मज्ञानं तितिक्षा च धर्माः साधारणा नृप ॥४५॥ सुखं हि वाञ्छते सर्वस्तच्च धर्मसमुद्भवम् । तस्माद्धर्मः सदा कार्यः सर्ववर्णैः प्रयत्नतः ॥४६॥ यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् । यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥४७॥ धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥ ४८ ॥ चतुर्भिरपि चैवैतैर्नित्यमाश्रमिभिर्द्विजैः । दशलक्षणको धर्मः सेवितव्यः प्रयत्नतः ॥ ४९ ॥

पुत्रैर्मित्रैर्गृहैर्दारैर्वियुक्तस्य धनेन वा । मग्नस्य व्यसने कृच्छ्रे पुंसः श्रेयस्करी धृतिः ॥ ५० ॥ धैर्येण युक्तं सततं शरीरं न विशीर्यते । विशोकता सुखं धत्ते धत्ते चारोग्यमुत्तमम् । आरोग्याच्च शरीरस्य स पुनर्विन्दते श्रियम् ॥ ५१ ॥ सपदि विलयमेतु राजलक्ष्मीरुपरि पतन्त्वथवा कृपाणधाराः । अपहरतुतरां शिरः कृतान्तो मम तु मतिर्न मनागपैतु धर्मात् ॥५२॥ धर्माज्जन्म कुले शरीरपटुता सौभाग्यमायुर्बलम् धर्मेणैव भवन्ति निर्मलयशोविद्यार्थसम्पत्तयः । कान्ताराच्च महाभयाच्च सततं धर्मः परित्रायते धर्मः सम्यगुपासतां भवति हि स्वर्गापवर्गप्रदः ॥५३॥ धर्मः सर्वसुखंकरो हितकरो धर्मं बुधाश्चिन्वते धर्मेणैव समाप्यते शिवसुखं धर्माय तस्मै नमः । धर्मान्नास्त्यपरः सुहृद्भवभृतां धर्मो हि द्रव्यं सतां धर्मे चित्तमहं दधे प्रतिदिनं हे धर्म मां पालय ॥५४॥ संक्षेपात्कथ्यते धर्मो जनाः किं विस्तरेण वः । परोपकारः पुण्याय पापाय परपीडनम् ॥ ५५ ॥ आरम्भो न्याययुक्तो यः स हि धर्म इति स्मृतः । अनाचारस्त्वधर्मेति ह्येतच्छिष्टानुशासनम् ॥५६॥ इज्याऽध्ययनदानानि तपः सत्यं क्षमा दमः । अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः ॥५७॥ श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम् । आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥५८॥ यथा यथा हि पुरुषः कल्याणे कुरुते मनः । तथा तथाऽस्य सर्वार्थाः सिध्यन्ते नात्र संशयः ॥५९॥ सर्वेषां यः सुहृन्नित्यं

सर्वेषाञ्च हिते रतः । कर्मणा मनसा वाचा स धर्मं वेद नेतरः ॥६०॥ अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा । अनुग्रहश्च दानञ्च सतां धर्मः सनातनः ॥६१॥ चक्षुर्दद्यान्मनो दद्याद्वाचं दद्यात्सुभाषितम् । उत्थाय चासनन्दद्यादेष धर्मः सनातनः ॥६२॥ अहिंसा सत्यमक्रोधो दानमेतच्चतुष्टयम् । अजातशत्रो सेवस्व धर्म एषः सनातनः ॥६३॥ सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् । प्रियञ्च नानृतं ब्रूयादेष धर्मः सनातनः ॥६४॥ गृहस्थः पालयेद्दारान्विद्यामभ्यासयेत्सुतान् । गोपयेत्स्वजनान्बन्धूनेष धर्मः सनातनः ॥ ६५ ॥ ब्रह्मचर्यं तथा सत्यमनुक्रोशो धृतिः क्षमा । सनातनस्य धर्मस्य मूलमेतत्सनातनम् ॥६६॥ अकृत्यं नैव कर्तव्यं प्राणत्यागेऽप्युपस्थिते । न च कृत्यं परित्याज्यमेष धर्मः सनातनः ॥६७॥ दमं निःश्रेयसे प्राहुर्वृद्धा निश्चितदर्शिनः। ब्राह्मणस्य विशेषेण दमो धर्मः सनातनः॥६८॥ यथा पत्याश्रयो धर्मःस्त्रीणां लोके सनातनः। अपवर्गमतिर्नित्यो यतिधर्मःसनातनः।६९।भरतः पालयेद्राज्यं शुश्रूषेच्च पितुर्यथा । तथा भवत्या कर्तव्यं स हि धर्मःसनातनः ॥७०॥ त्वया मया च वैदेह्या लक्ष्मणन सुमित्रया । पितुर्नियोगे स्थातव्यमेष धर्मः सनातनः ॥ ७१ ॥ स मां पिता यथा शास्ति सत्यधर्मपथे स्थितः । तथा वर्तितुमिच्छामि स हि धर्मः सनातनः ॥७२॥ वेदोक्तः परमो धर्मः स्मृतिशास्त्रगतोऽपरः । शिष्टाचीर्णोऽपरः प्रोक्तस्त्रयो धर्माः सनातनाः ॥७३॥

नित्यः स्वाध्यायिता धर्मो धर्मो यज्ञः सनातनः । दानं प्रशस्यते चास्य यथाशक्ति यथाविधि ॥ ७४ ॥ प्रातरुत्थाय चाचम्य भोजनेनोपमन्त्र्य च । सत्कृत्यानुव्रजेद्यस्तु तस्य धर्मः सनातनः ॥ ७५ ॥ अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः । स्वधर्मे च व्यवस्थानं शौचमित्यभिधीयते ॥७६॥ नास्तिक्यं वेदनिन्दाञ्च देवतानाञ्च कुत्सनम् । द्वेषं दम्भञ्च मानञ्च क्रोधं तैक्ष्ण्यञ्च वर्जयेत् ॥७७॥ परापवादं न ब्रूयान्नाप्रियञ्च कदाचन । न मन्युः कश्चिदुत्पाद्यः पुरुषेण सुखार्थिना ॥७८॥ यावत्स्वस्थमिदं देहं यावन्मृत्युश्च दूरतः । तावदात्महितं कुर्यात्प्राणान्ते किं करिष्यति ॥७९॥ आयुः क्षणलवमात्रं न लभ्यते हेमकोटिभिः क्वापि । तच्चेद्गच्छति सर्वं मृषा ततः काऽधिका हानिः ॥८०॥ अध्रुवेण शरीरेण प्रतिक्षणविनाशिना । ध्रुवं यो नार्ज्जयेद्धर्मं स शोच्यो मूढचेतनः ॥ ८१ ॥ धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः । तस्माद्धर्मो न हन्तव्यो मा नो धर्मो हतोऽवधीत् ॥८२॥ यत्र धर्मो ह्यधर्मेण सत्यं यत्रानृतेन च । हन्यते प्रेक्षमाणानां हतास्तत्र सभासदः ॥८३॥ धर्मस्य तस्य लिङ्गानि दया क्षान्तिरहिंसनम् । तपो दानञ्च शीलञ्च सत्यं शौचं वितृष्णता ॥ ८४ ॥ सत्यादुत्पद्यते धर्मो दया दानाद्विवर्धते । क्षमया तिष्ठते धर्मः क्रोधाद्धर्मो विनश्यति ॥८५॥ अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः । एतं सामासिकं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः ॥८६॥ आर्जवं धर्ममित्या-

हुरधमा जिह्म उच्यते । आर्जवेनेह संयुक्तो नरो धर्मेण युज्यते ॥८७॥ सर्ववेदेषु वा स्नानं सर्वभूतेषु चार्जवम् । उभे एते समे स्यातामार्जवं वा विशिष्यते ॥ ८८ ॥ ऋषियज्ञं देवयज्ञं भूतयज्ञश्च सर्वदा । नृयज्ञं पितृयज्ञश्च यथाशक्ति न हापयेत् ॥८९॥ अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो वलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥ ९० ॥ पञ्च यज्ञांस्तु यो मोहान्न करोति गृहाश्रमे । तस्य नायं न च परो लोको भवति धर्मतः ॥९१॥ बालो वा यदि वा वृद्धो युवा वा गृहमागतः । तस्य पूजा विधातव्या सर्वस्याभ्यागतो गुरुः ॥ ९२ ॥ उत्तमस्यापि वर्णस्य नीचोऽपि गृहमागतः । पूजनीयो यथायोग्यं सर्वस्याभ्यागतो गुरुः॥९३॥ राज्यञ्च सम्पदा भोगाः कुलेजन्म सुरूपता । पाण्डित्यमायुरारोग्यं धर्मस्यैतत्फलं विदुः ॥९४॥ सुकुलजन्म विभूतिरनेकधा प्रियसमागमसौख्यपरम्परा । नृपकुले गुरुता विमलं यशो भवति पुण्यतरोः फलमीदृशम् ॥९५॥ प्रियवचनवादी प्रियो भवति विमृशितकार्यकरोऽधिकं जयति। बहुमित्रकरः सुखं वसते यश्च धर्मरतः स गतिं लभते ॥९६॥ न जातु कामान्न भयान्न लोभाद्धर्मं जह्याज्जीवितस्यापि हेतोः। नित्यो धर्मः सुखदुःखे त्वनित्ये जीवो नित्यो हेतुरस्य त्वनित्यः ॥ ९७ ॥ न सीदन्नपि धर्मेण मनोऽधर्मे निवेशयेत् । अधार्मिकाणां पापानामाशु पश्यन्विपर्ययम्॥९८॥ अनित्यानि शरीराणि विभवो नैव शाश्वतः । नित्यं संनिहितो मृत्युः

कर्तव्यो धर्मसंग्रहः ॥९९॥ नहीदृशाः सन्त्यपरे पृथिव्यां ये योधका धार्तराष्ट्रेण लब्धाः । धर्मस्तु नित्यो मम धर्म एव महाबलः शत्रुनिवर्हणाय ॥१००॥ धर्मं प्रसङ्गादपि नाचरन्ति पापं प्रयत्नेन समाचरन्ति । आश्चर्यमेतद्धि मनुष्यलोकेऽमृतं परित्यज्य विषं पिबन्ति ॥१०१॥ आहारनिद्राभयमैथुनञ्च सामान्यमेतत्पशुभिर्नराणाम् । धर्मो हि तेषामधिको विशेषो धर्मेण हीनाः पशुभिः समानाः ॥१०२॥

## क्षमाप्रभावः ३

क्षमा शस्त्रं करे यस्य दुर्जनः किं करिष्यति । अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ॥१॥ क्षमा बलमशक्तानां शक्तानां भूषणं क्षमा । क्षमा वशीकृतिर्लोके क्षमया किन्न साध्यते ॥ २ ॥ नरस्याभरणं रूपं रूपस्याभरणं गुणः । गुणस्याभरणं ज्ञानं ज्ञानस्याभरणं क्षमा ॥३॥ क्षमा शत्रौ च मित्रे च यतीनामेव भूषणम् । अपराधिषु सत्त्वेषु नृपाणां सैव दूषणम् ॥४॥ यदि न स्युर्मनुष्येषु क्षमिणः पृथिवीसमाः । न स्यात्सन्धिर्मनुष्याणां क्रोधमूलो हि विग्रहः ॥५॥ क्षुधासमं नास्ति शरीरपीडनं चिन्तासमं नास्ति शरीरशोषणम् । विद्यासमं नास्ति शरीरभूषणं क्षमासमं नास्ति शरीररक्षणम् ॥ ६ ॥ यः परेषां नरो नित्यमतिवादांस्तितिक्षते । देवयानि विजानीहि तेन सर्वमिदं जितम् ॥७॥ यः संधारयते मन्युं योऽतिवादांस्तितिक्षते । यश्च तप्तो न तपति दृढं सोऽर्थस्य भाजनम् ॥८॥ क्रोधो मूल-

मनर्थानां क्रोधः संसारवर्द्धनः । धर्मक्षयकरः क्रोधस्तस्मा-
त्क्रोधं विवर्जयेत् ॥ ९ ॥ क्रोधस्य कालकूटस्य विद्यते मह-
दन्तरम् । स्वाश्रयं दहति क्रोधः कालकूटो न चाश्रयम् ॥ १० ॥
उत्तमे तु क्षणं कोपो मध्यमे घटिकाद्वयम् । अधमे स्यादहो-
रात्रं चाण्डाले मरणान्तिकः ॥ ११ ॥ क्रोधो नाशयते धैर्यं
क्रोधो नाशयते श्रुतम् । क्रोधो नाशयते सर्वं नास्ति क्रोध-
समो रिपुः ॥ १२ ॥ यस्तु क्रोधं समुत्पन्नं प्रज्ञया प्रतिबाधते ।
तेजस्विनन्तं विद्वांसो मन्यन्ते तत्त्वदर्शिनः ॥ १३ ॥ विपाके
दुःखं कामस्य नाधुना सर्वदेहिनाम् । विपाकेऽप्यधुना क्रोधः
सर्वदा दुःखदः स्मृतः ॥ १४ ॥ जायते यत्र स क्रोधस्तन्दहेदेष
सर्वतः । विषयश्च क्वचित्क्रोधः सफलो निर्दहेदयम् ॥ १५ ॥
अश्वारोहं यथा दुष्टो वाजी गर्ते निपातयेत् । एवं क्रोधोऽपि
नरके नरमाशु निपातयेत् ॥ १६ ॥ सुखार्थिनस्ततः पुंसो नास्ति
कोपसमो रिपुः । ततः कोपो नियन्तव्यः कामादप्यतिकष्टदः
॥ १७ ॥ क्रुद्धः पापं नरः कुर्यात्क्रुद्धो हन्याद्गुरूनपि । क्रुद्धः
परुषया वाचा श्रेयसोऽप्यवमन्यते ॥ १८ ॥ वाच्यावाच्यं हि
कुपितो न प्रजानाति कर्हिचित् । नाकार्यमस्ति क्रुद्धस्य ना-
वाच्यं विद्यते तथा ॥ १९ ॥ हिंस्यात्क्रोधादवध्यांस्तु वध्यान्सं-
पूजयीत च । आत्मानमपि च क्रुद्धः प्रेषयेद्यमसादनम् ॥ २० ॥
मातरं पितरं पुत्रं भ्रातरं वा सुहृत्तमम् । क्रोधाविष्टो नरो हन्ति
स्वामिनं वा सहोदरम् ॥ २१ ॥ एतान्दोषान्प्रपश्यद्भिर्जितः क्रोधो

मनीषिभिः । इच्छद्भिः परमं श्रेय इह चामुत्र चोत्तमम्॥२२॥ अपकारिणि कोपश्चेत्कोपे कोपः कथं न ते । धर्मार्थकाम-मोक्षाणां प्रसह्य परिपन्थिनि ॥ २३ ॥ अबुद्धिमाश्रितानान्तु क्षन्तव्यपराधिनाम् । नहि सर्वत्र पाण्डित्यं सुलभं पुरुषेण वै ॥२४॥ पूर्वोपकारी यस्ते स्यादपराधे गरीयसि । उपकारेण तत्तस्य क्षन्तव्यमपराधिनः ॥२५॥ धन्यास्ते पुरुषव्याघ्रा ये बुद्ध्या कोपमुत्थितम् । निरुन्धन्ति महात्मानो दीप्तमग्निमिवाम्भसा ॥२६॥ फलान्वितो धर्मयशोऽर्थनाशनः स चेदपार्थः स्वशरीरतापनः । न चेह नामुत्र हिताय यः सतां मनांसि कोपः समुपाश्रयेत्कथम् ॥२७॥ न भवति भवति च न चिरं भवति चिरञ्चेत्फले विसंवादी । कोपः सत्पुरुषाणां तुल्यः स्नेहेन नीचानाम् ॥ २८ ॥ क्रोधो हि शत्रुः प्रथमो नराणां देहस्थितो देहविनाशनाय । यथा स्थितः काष्ठगतो हि वह्निः स एव वह्निर्दहते च काष्ठम् ॥२९॥ नाक्रोशी स्यान्नावमानी परस्य मित्रद्रोही नोत नीचोपसेवी । न चाभिमानी न च हीनवृत्तो रूक्षां वाचं रुषतीं वर्जयीत ॥ ३० ॥ न द्विषन्तः क्षयं यान्ति यावज्जीवमपि घ्नतः । क्रोधमेव तु यो हन्ति तेन सर्वे द्विषो हताः ॥३१॥ क्षमावतामयं लोकः परश्चैव क्षमावताम् । इह सन्मानमृच्छन्ति परत्र च शुभां गतिम् ॥ ३२ ॥ क्षन्तव्यमेव सततं पुरुषेण विजानता । यदा हि क्षमते सर्वं ब्रह्म सम्पद्यते तदा ॥३३॥ मन्योर्हि विजयं कृष्णे प्रशंसन्तीह

साधवः । क्षमावतो जयो नित्यं साधोरिह सतां मतम् ॥३४॥ क्षमेदशक्तः सर्वस्य शक्तिमान् धर्म्मकारणात् । अर्थानर्थौ समौ यस्य तस्य नित्यं क्षमा हिता ॥३५॥ योऽर्थतत्वमविज्ञाय क्रोधस्यैव वशं गतः । स तथा तप्यते मूढो ब्राह्मणो नकुलादिव ॥३६॥ ये क्रोधं संनियच्छन्ति क्रुद्धान् संशमयन्ति च । न च कुप्यन्ति भूतानां दुर्गाण्यतितरन्ति ते ॥ ३७ ॥ एकः क्षमावतां दोषो द्वितीयो नोपपद्यते । यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥ ३८ ॥ सोऽस्य दोषो न मन्तव्यः क्षमा हि परमं बलम् । शान्तिखड्गः करे यस्य किं करिष्यति दुर्जनः ॥३९॥ आत्मैव यदि नात्मानमहितेभ्यो निवारयेत् । कोऽन्यो हिततरस्तस्माद्य एनं विनिवारयेत् ॥४०॥

## सत्यम् ४

अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् । इदमहमनृतात्सत्यमुपैमि ॥ १ ॥ नास्ति सत्यसमो धर्मो न सत्याद्विद्यते परम् । नहि तीव्रतरं किञ्चिदनृतादिह विद्यते ॥२॥ अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम् । अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥३॥सत्यं मृदु प्रियं वाक्यं धीरो हितकरं वदेत् । आत्मोत्कर्षं तथा निन्दां परेषां परिवर्जयेत् ॥४॥ सत्यमेव व्रतं यस्य दया दीनेषु सर्वदा । कामक्रोधौ वशौ यस्य स साधुः कथ्यते बुधैः ॥५॥ ये वदन्तीह सत्यानि प्राणत्यागेऽप्युपस्थिते । प्रमाणभूता भूतानां दुर्गाण्यतितरन्ति ते ॥६॥

सत्यं वाचनिको धर्मो यथादृष्टार्थवेदनम् । उक्तार्थतश्चाचलन-
मिदमुक्तं मनीषिभिः ॥७॥ यथार्थकथनं यच्च सर्वलोकसुख-
प्रदम् । तत्सत्यमिति विज्ञेयमसत्यं तद्विपर्ययम् ॥८॥ सत्यस्य
वचनं श्रेयः सत्यादपि हितं वदेत् । यद्भूतहितमत्यन्तं तत्सत्य-
मिति कथ्यते ॥९॥ असत्प्रलापं पारुष्यं पैशुन्यमनृतं तथा ।
चत्वारि वाचा राजेन्द्र न जल्पेन्नानुचिन्तयेत् ॥१०॥सत्यहीना
वृथा पूजा सत्यहीनो वृथा जपः । सत्यहीनं तपो व्यर्थमूषरे
वपनं यथा ॥११॥ समूल एष शुष्येत् स लोकद्वयफलं विना ।
अनृतं यो वदेत्क्वापि पुरुषः परिमोहितः ॥१२॥ नासत्यवा-
दिनः सख्यं न पुण्यं न यशो भुवि । दृश्यते नापि कल्याणं
कालकूटमिवाश्नतः ॥१३॥ मानाद्वा यदि वा लोभात्क्रोधाद्वा
यदि वा भयात् । योऽन्यायादन्यथा ब्रूते स नरः पापमाप्नु-
यात् ॥ १४ ॥ योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किन्तेन न कृतं पापं चौरेणात्माऽपहारिणा ॥१५॥ वाच्यर्था
नियताः सर्वे वाङ्मूला वाग्विनिःसृताः । तान्तु यः स्तेनयेद्वाचं
स सर्वस्तेयकृन्नरः ॥ १६ ॥ नग्नो मुण्डः कपालेन भिक्षार्थी
क्षुत्पिपासितः । अन्धः शत्रुकुलं गच्छेद्यः साक्ष्यमनृतं वदेत् ॥
१७॥ अवाक्शिरास्तमस्यन्धे किल्विषी नरकं व्रजेत् । य प्रश्नं
वितथं ब्रूयात्पृष्टः सन्धर्मनिश्चये ॥१८॥ मन्यते पापकं कृत्वा
न कश्चिद्वेत्ति मामिति । विदन्ति चैनं देवाश्च यश्चैवान्तःपूरुषः॥
१९॥ एकमेवाद्वितीयं यद्राजन्नावबुध्यसे । सत्यं स्वर्गस्य सो-

पानं पारावारस्य नौरिव ॥२०॥ सत्येन रक्ष्यते धर्मो विद्याऽभ्यासेन रक्ष्यते । मृज्यया रक्ष्यते रूपं कुलं वृत्तेन रक्ष्यते ॥२१॥ गोभिर्विप्रैश्च वेदैश्च सतीभिः सत्यवादिभिः । अलुब्धैर्दानशूरैश्च सप्तभिर्धार्यते मही ॥२२॥ त्रीण्येव तु पदान्याहुः पुरुषस्योत्तमं व्रतम् । न द्रुह्येच्चैव दद्याच्च सत्यं चैव परं वदेत् ॥२३॥ भूमिः कीर्तिर्यशो लक्ष्मीः पुरुषं प्रार्थयन्ति हि । सत्यं समनुवर्तन्ते सत्यमेव भजेत्ततः ॥२४॥ सत्यस्य वचनं साधु न सत्याद्विद्यते परम् । सत्येन विधृतं सर्वं सर्वं सत्ये प्रतिष्ठितम् ॥२५॥ सत्यार्जवं परं धर्ममाहुर्धर्मविदो जनाः । दुर्ज्ञेयः शाश्वतो धर्मः स च सत्ये प्रतिष्ठितः ॥२६॥ सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् । अन्तः शरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः ॥ २७ ॥ सत्यमेव जयते नानृतं सत्येन पन्था विततो देवयानः । येनाक्रमन्त्यृषयो ह्याप्तकामा यत्र तत्सत्यस्य परमं निधानम् ॥२८॥ न सा सभा यत्र न सन्ति वृद्धा वृद्धा न ते ये न वदन्ति धर्मम् । धर्मो न वै यत्र च नास्ति सत्यं सत्यं न तद्यच्छलेनानुविद्धम् ॥ २९ ॥ एकोऽहमस्मीति च मन्यसे त्वं न हृच्छयं वेत्सि मुनिं पुराणम् । यो वेदिता कर्मणः पापकस्य तस्यान्तिके त्वं वृजिनं करोषि ॥ ३० ॥

## वर्णधर्माः ५

ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू तदस्य

यद्वैश्यः पद्भ्याँ शूद्रो अजायत ॥ १ ॥ ब्राह्मणः केन भवति क्षत्रियो वा द्विजोत्तम । वैश्यः शूद्रश्च विप्रर्षे तद्ब्रूहि वदतांवर ॥ २ ॥ कामः क्रोधो भयं लोभः शोकश्चिन्ता क्षुधा श्रमः । सर्वेषां नः प्रभवति कस्माद्वर्णो विभज्यते ॥ ३ ॥ स्वेदमूत्रपुरीषाणि श्लेष्मा पित्तं सशोणितम् । तनुः क्षरति सर्वेषां कस्माद्वर्णो विभज्यते ॥४॥ न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत् । ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम् ॥५॥ सत्यं दानमथाद्रोह आनृशंस्यं त्रपा घृणा । तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः ॥६॥ येन केनचिदाच्छन्नो येन केनचिदाशितः । यत्र कुत्र च शायी स्यात्तन्देवा ब्राह्मणं विदुः ॥७॥ क्रोधः शत्रुः शरीरस्थो मनुष्याणां द्विजोत्तम । यः क्रोधमोहौ त्यजति तन्देवा० ॥८॥ यो वदेदिह सत्यानि गुरुं संतोषयेत च । हिंसितश्च न हिंसेत तन्देवा० ॥९॥ जितेन्द्रियो धर्मपरः स्वाध्यायनिरतः शुचिः । कामक्रोधौ वशौ यस्य तन्देवा० ॥ १०॥ योऽध्यापयेदधीयीत यजेद्वा याजयीत वा । दद्याद्वाऽपि यथाशक्ति तन्देवा० ॥ ११ ॥ न क्रुध्येन्न प्रहृष्येच्च मानितोऽमानितश्च यः । सर्वभूतेष्वभयदस्तन्देवा ब्राह्मणं विदुः ॥१२॥ धर्मन्तु ब्राह्मणस्याहुः स्वाध्यायं दममार्जवम् । इन्द्रियाणां निग्रहञ्च शाश्वतं द्विजसत्तम ॥१३॥ स्वाध्यायेन जपैर्होमैस्त्रैविद्येनेज्यया सुतैः । महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥१४॥ ब्राह्मणस्य हि देहोऽयं क्षुद्रकामाय नेष्यते । कृच्छ्राय

तपसे चेह प्रेत्यानन्तसुखाय च ॥ १५ ॥ नानृतं ब्राह्मणो ब्रूते न हन्ति प्राणिनं द्विजः । न सेवां कुरुते विप्रो न द्विजः पापकृद्भवेत् ॥१६॥ शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च । ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥१७॥ अध्यापनमध्ययनं यजनं याजनन्तथा । दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत् ॥१८॥ त्रीणि कर्माणि जानीत ब्राह्मणानान्तु जीविका । याजनाध्यापने चोभे शुद्धाच्चापि प्रतिग्रहः ॥१९॥ ये शान्तदान्ताः श्रुतिपूर्णकर्णा जितेन्द्रियाः स्त्रीविषये निवृत्ताः । प्रतिग्रहे संकुचिताभिहस्तास्ते ब्राह्मणास्तारयितुं समर्थाः ॥ २० ॥ धर्मश्च सत्यञ्च तपो दमश्च अमात्सर्यं ह्रीस्तितिक्षाऽनसूया । दानं श्रुतं चैव धृतिः क्षमा च महाव्रता द्वादश ब्राह्मणस्य ॥ २१॥ शूद्रे चैतद्भवेल्लक्ष्यं द्विजे तच्च न विद्यते । न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ।२२। कामभोगप्रियास्तीक्ष्णाः क्रोधनाः प्रियसाहसाः । त्यक्तस्वधर्मा रक्ताङ्गास्ते द्विजाः क्षत्रतां गताः ॥२३॥ प्रजानां रक्षणं दानमिज्याऽध्ययनमेव च । विषयेष्वप्रसक्तिश्च क्षत्रियस्य समासतः ॥२४॥ शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् । दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥२५॥ लोकसंरक्षणे दक्षः शूरो दान्तः पराक्रमी । दुष्टनिग्रहशीलो यः स वै क्षत्रिय उच्यते ॥२६॥ गोभ्यो वृत्तिं समास्थाय पीताः कृष्युपजीविनः । स्वधर्मान्नानुतिष्ठन्ति ते द्विजा वैश्यतां गताः ॥२७॥ क्रयविक्रयकुशला ये नित्यं

पण्यजीविनः । पशुरक्षाः कृषिकरास्ते वैश्याः कीर्तिता भुवि ॥२८॥ पशूनां रक्षणं दानमिज्याऽध्ययनमेव च । वणिक्-पथं कुसीदञ्च वैश्यस्य कृषिमेव च ॥२९॥ कृषिगोरक्षवाणिज्यं वैश्यकर्म स्वभावजम् । परिचर्यात्मकं कर्म शूद्रस्यापि स्वभाव-जम् ॥३०॥ सर्वभक्ष्यरतिर्नित्यं सर्वकर्मकरोऽशुचिः । त्यक्त-वेदस्त्वनाचारः स वै शूद्र इति स्मृतः ॥३१॥ हिंसाऽनृतप्रिया लुब्धाः सर्वकर्मोपजीविनः । कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः शूद्रतां गताः॥३२॥ द्विजसेवाऽर्चनरताः शूराः शान्ता जिते-न्द्रियाः । सीरकाष्ठतृणवहास्ते नराः शूद्रसंज्ञिताः ॥ ३३ ॥ एकमेव तु शूद्रस्य प्रभुः कर्मसमादिशत् । एतेषामेव वर्णानां शुश्रूषामनसूयया ॥३४॥ त्यक्तस्वधर्माचरणा निर्घृणाः परपी-डकाः । चण्डाश्च हिंसका नित्यं म्लेच्छास्ते ह्यविवेकिनः॥३५॥ न जात्या ब्राह्मणश्चात्र क्षत्रियो वैश्य एव न । न च शूद्रो न वै म्लेच्छो भेदिता गुणकर्मभिः ॥३६॥ ब्राह्मणस्त्वनधीयान-स्तृणाग्निरिव शाम्यति । तस्मै हव्यं न दातव्यं नहि भस्मनि हूयते ॥३७॥ श्रुतिस्मृती उभे नेत्रे विप्राणां परिकीर्तिते । एकेन विकलः काणो द्वाभ्यामन्धः प्रकीर्तितः ॥३८॥ ब्राह्म-णस्य तपो ज्ञानं तपः क्षत्रस्य रक्षणम् । वैश्यस्य तपो वार्ता तपः शूद्रस्य सेवनम् ॥ ३९ ॥ न च वेदादृते किञ्चिच्छास्त्रं ब्रह्मविधायकम् । योऽन्यत्र रमते सोऽसौ न सम्भाष्यो द्वि-जातिभिः ॥४०॥ शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम् ।

क्षत्रियाज्ज्ञातमेवन्तु विद्याद्वैश्यात्तथैव च ॥४१॥ अतपास्त्वनधीयानः प्रतिग्रहरुचिर्द्विजः । अम्भस्यश्मप्लवेनेव सह तेनैव मज्जति ॥४२॥ संमानाद्ब्राह्मणो नित्यमुद्विजेद्विषादिव । अमृतस्येव चाकांक्षेदवमानस्य सर्वदा ॥४३॥ तस्मादविद्वान्बिभियाद्यस्मात्तस्मात्प्रतिग्रहात् । स्वल्पकेनाप्यविद्वान्हि पङ्के गौरिव सीदति ॥४४॥ यथा प्लवेनोपलेन निमज्जत्युदके तरन् । तथा निमज्जतोऽधस्तादज्ञौ दातृप्रतीच्छकौ ॥४५॥ न वार्यपि प्रयच्छेत्तु वैडालव्रतिके द्विजे । न वकव्रतिके विप्रे नावेदविदि धर्मवित् ॥४६॥ त्रिष्वप्येतेषु दत्तं हि विधिनाऽप्यर्जितन्धनम् । दातुर्भवत्यनर्थाय परत्रादातुरेव च ॥४७॥ धर्मध्वजी सदा लुब्धश्छाद्मिको लोकदम्भकः । वैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसन्धकः ॥४८॥ अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः । शठो मिथ्याविनीतश्च वकव्रतचरो द्विजः ॥४९॥ ये वकव्रतिनो विप्रा ये च मार्जारलिङ्गिनः । ते पतन्त्यन्धतामिस्रे तेन पापेन कर्मणा ॥५०॥ यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णाभिव्यञ्जकम् । यद्यन्यत्रापि दृश्येत तत्तेनैव विनिर्दिशेत् ॥५१॥ गणिकागर्भसंभूतो वसिष्ठश्च महामुनिः । तपसा ब्राह्मणो जातः संस्कारस्तत्र कारणम् ॥५२॥ जातो व्यासस्तु कैवर्त्याः श्वपाक्यास्तु पराशरः । बहवोऽन्येपि विप्रत्वं प्राप्ता ये पूर्वमद्विजाः ॥५३॥ विश्वामित्रो वसिष्ठश्च मतङ्गो नारदादयः । तपोविशेषैः संप्राप्ता उत्तमत्वं न जातितः ॥५४॥ ततो

ब्राह्मणतां यातो विश्वामित्रो महातपाः । क्षत्रियः सोऽप्यथ तथा ब्रह्मवंशस्य कारकः ॥५५॥ तस्य पुत्रा महात्मानो ब्रह्मवंशविवर्धनाः । तपस्विनो ब्रह्मविदो गोत्रकर्तार एव च ॥५६॥ विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणां तु वीर्यतः । वैश्यानां धान्यधनतः शूद्राणामेव जन्मतः ॥५७॥ क्रियाहीनश्च मूर्खश्च सर्वधर्मविवर्जितः । निर्दयः सर्वभूतेषु विप्रश्चाण्डाल उच्यते ॥५८॥ पश्य लक्ष्मण पम्पायां वकः परमधार्मिकः । शनैः शनैः पदं धत्ते प्राणिनां वधशङ्कया ॥ ५९ ॥ वकः किं श्लाघ्यते राम येनाहं निष्कुलीकृता । सहवासी विजानाति चरितं सहवासिनः ॥ ६० ॥

## सन्ध्योपासना ६

उपत्वाऽग्ने दिवे दिवे दोषा वस्तर्धिया वयम् । नमो भरन्त एमसि ॥१॥ सन्ध्यामुपासते ये तु सततं शंसितव्रताः । विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम् ॥ २ ॥ ब्रह्मणोपासिता सन्ध्या विष्णुना शङ्करेण च । नोपास्ते कश्च तां देवीं सिद्धिकामो द्विजोत्तमः ॥ ३ ॥ अहोरात्रस्य यः सन्धिः सूर्यनक्षत्रवर्जितः । सा च सन्ध्या समाख्याता मुनिभिस्तत्त्ववादिभिः ॥४॥ सन्ध्या येन न विज्ञाता सन्ध्या येनानुपासिता । स शूद्रवद्बहिष्कार्यः सर्वस्माद् द्विजकर्मणः ॥५॥ सन्ध्याहीनस्तु यो विप्रो ह्यन्यत्र कुरुते श्रमम् । स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥६॥ तस्मान्नित्यं प्रकर्तव्यं सन्ध्योपासन-

मुत्तमम् । तदभावेऽन्यकर्मादावधिकारो भवेन्नहि ॥७॥ नानु-तिष्ठति यः पूर्वां नोपास्ते यश्च पश्चिमाम् । स साधुभिर्बहिष्कार्यः सर्वस्माद् द्विजकर्मणः ॥८॥ तस्मात्सर्वप्रयत्नेन सन्ध्योपासां चरेद् द्विजः । अन्यथा शूद्रवद्भूयात्सर्वकार्येषु निन्दितः ॥९॥ तस्मान्न लङ्घयेत्सन्ध्यां सायं प्रातः समाहितः । उल्लङ्घयति यो मोहात्स याति नरकं ध्रुवम् ॥ १० ॥ कौसल्या सुप्रजा राम पूर्वा सन्ध्या प्रवर्त्तते । उत्तिष्ठ नरशार्दूल कर्तव्यं दैवमाह्निकम् ॥११॥ तस्यर्षेः परमोदारं वचः श्रुत्वा नरोत्तमौ । स्नात्वा कृतोदकौ वीरौ जेपतुः परमं जपम् ॥ १२ ॥ उभे सन्ध्ये शयानस्य यत्पापं परिकल्प्यते । तच्च पापं भवेत्तस्य यस्यार्योऽनुमते गतः ॥१३॥ ऋषेर्वचनमाज्ञाय रामः सन्ध्यामुपासितुम् । अपाक्रमत्सरः पुण्यमप्सरोगणसेवितम् ॥ १४ ॥ तत्रोदकमुपस्पृश्य सन्ध्यामन्वास्य पश्चिमाम् । आश्रमं प्राविशद्रामः कुम्भयोनेर्महात्मनः ॥ १५ ॥ सन्ध्याकालमना श्यामा ध्रुवमेष्यति जानकी । नदीश्चेमां शुभजलां सन्ध्यार्थे वरवर्णिनी ॥१६॥ यदि जीवति सा देवी ताराधिपनिभानना । आगमिष्यति साऽवश्यमिमां शीतजलां नदीम् ॥१७॥ अभ्यसेच्च तथा पुण्यां गायत्रीं वेदमातरम् । गत्वाऽरण्ये नदीतीरे सर्वपापविशुद्धये ॥१८॥ ये न पूर्वामुपासन्ते द्विजाः सन्ध्यां न पश्चिमाम् । सर्वांस्तान्धार्मिको राजा शूद्रकर्माणि कारयेत् ॥१९॥ ऋषयो दीर्घसन्ध्यात्वाद्दीर्घमायुरवाप्नुयुः । प्रज्ञां

यशश्च कीर्तिश्च ब्रह्मवर्चसमेव च ॥२०॥ अग्निकार्यात्परिभ्रष्टाः सन्ध्योपासनवर्जिताः । वेदं चैवानधीयानाः सर्वे ते वृषलाः स्मृताः ॥२१॥ सन्ध्यां नोपासते यस्तु ब्राह्मणो हि विशेषतः । स जीवन्नेव शूद्रः स्यान्मृतः श्वा चैव जायते ॥२२॥ सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत् ॥ २३ ॥ गायत्र्याः परमं नास्ति दिवि चेह च पावनम् । हस्तत्राणप्रदा देवी पततां नरकार्णवे ॥२४॥ गायत्रीरहितो विप्रः शूद्रादप्यशुचिर्भवेत् । गायत्रीब्रह्मतत्त्वज्ञाः संपूज्यन्ते जनैर्द्विजाः ॥२५॥ सावित्रीमात्रसारोऽपि वरं विप्रः सुयन्त्रितः । नायन्त्रितस्त्रिवेदोऽपि सर्वाशी सर्वविक्रयी ॥२६॥ पूर्वां सन्ध्यां सनक्षत्रामुपासीत यथाविधि । गायत्रीमभ्यसेत्तावद्यावदादित्यदर्शनम् ॥२७॥उपास्य पश्चिमां सन्ध्यां सादित्याञ्च यथाविधि । गायत्रीमभ्यसेत्तावद्यावत्ताराणि पश्यति ॥ २८ ॥ सन्ध्याहीना व्रतभ्रष्टाः पिशुना विषयात्मकाः । तेभ्यो दत्तं निष्फलं स्यान्नात्र कार्या विचारणा ॥२९॥ सन्ध्यालोपाच्च चकितः स्नानशीलश्च यः सदा । तं दोषा नोपसर्पन्ति गरुत्मन्तमिवोरगाः ॥३०॥

## अतिथि-सत्कारः ७

संप्राप्ताय त्वतिथये प्रदद्यादासनोदके । अन्नं चैव यथाशक्ति सत्कृत्य विधिपूर्वकम ॥१॥ न वै स्वयं तदश्नीयाद-

तिथिं यत्न भोजयेत्। धन्यं यशस्यमायुष्यं स्वर्ग्यं चातिथि-
भोजनम् ॥२॥ अतिथिं तत्र संप्राप्तं पूजयेत्स्वागतादिना।
तथाऽऽसनप्रदानेन पादप्रक्षालनेन च ॥ ३ ॥ श्रद्धया चान्न-
दानेन प्रियप्रश्नोत्तरेण च। गच्छतश्चानुयानेन प्रीतिमुत्पाद-
येद् गृही ॥४॥ अभुक्त्वाऽतिथये चान्नं प्रयच्छेद्यः समाहितः।
स वै ब्रह्मविदो लोकान् प्राप्नुयाद्भरतर्षभ ॥ ५ ॥ अन्नञ्च नो
बहु भवेदतिथींश्च लभेमहि। याचितारश्च नः सन्तु माया-
चिष्म कदाचन ॥ ६ ॥ श्रान्तमध्वनि वर्तन्तं वृद्धमर्हमुपस्थि-
तम्। अर्चयेद् भूतिमन्विच्छन् गृहस्थो गृहमागतम् ॥ ७ ॥
अप्रणोद्योऽतिथिः सायं सूर्योढो गृहमेधिना। काले प्राप्त-
स्त्वकाले वा नास्यानश्नन् गृहे वसेत् ॥८॥ यो दद्यादपरि-
क्लिष्टमन्नमध्वनि वर्तते। श्रान्तायादृष्टपूर्वाय तस्य पुण्यफलं
महत् ॥ ९ ॥ नावमन्येदभिगतं न प्रणुद्यात्कथञ्चन। अपि
श्वपाके शुनि वा न दानं विप्रणश्यति ॥१०॥ तृणानि भूमि-
रुदकं वाक् चतुर्थी च सूनृता। एतान्यपि सतां गेहे नो-
च्छिद्यन्ते कदाचन ॥११॥ यतिश्च ब्रह्मचारी च पक्वान्नस्वा-
मिनावुभौ। तयोरन्नमदत्त्वा च भुक्त्वा चान्द्रायणं चरेत् ॥
१२॥ आसनावसथौ शय्यामनुव्रज्यामुपासनाम्। उत्तमेषूत्तमं
कुर्याद्धीने हीनं समे समम् ॥ १३ ॥ योऽर्चितं प्रतिगृह्णाति
ददात्यर्चितमेव च। तावुभौ गच्छतः स्वर्गं नरकं तु विपर्यये
॥ १४ ॥ काष्ठभारसहस्रेण घृतकुम्भशतेन च। अतिथिर्यस्य

भग्नाशस्तस्य होमो निरर्थकः ॥ १५ ॥ अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते । स तस्मै दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ॥ १६ ॥ अघं स केवलं भुंक्ते य पचत्यात्मकारणात् । यज्ञ-शिष्टाशनं ह्येतत्सतामन्नं विधीयते ॥ १७ ॥ यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः । भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ १८॥ उपासते ये गृहस्थाः परपाक-मबुद्धयः । तेन ते प्रेत्य पशुतां व्रजन्त्यन्नादिदायिनाम् ॥१९॥ मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत्स तस्य । नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ॥ २०॥ न्यायागतेन द्रव्येण कर्तव्यं पारलौकिकम् । दानं हि विधिना देयं काले पात्रे गुणान्विते ॥२१॥ न क्लेशेन विना द्रव्यं न द्रव्येण विना क्रिया । क्रियाहीने न धर्मः स्याद्धर्म-हीने कुतः सुखम् ॥ २२ ॥ स जीवति य एवैको बहुभिश्चोप-जीव्यते । जीवन्तो मृतकास्त्वन्ये पुरुषाः स्वोदरम्भराः ॥२३॥ माता पिता गुरुर्भार्या प्रजा दीनः समाश्रितः । अभ्यागतो-ऽतिथिश्चापि पोष्यवर्ग उदाहृतः ॥ २४॥ सार्वभौतिकमन्नाद्यं कर्तव्यं तु विशेषतः । ज्ञानविद्भ्यः प्रदातव्यमन्यथा नरकं व्रजेत् ॥ २५ ॥ न यज्ञैर्दक्षिणावद्भिर्वह्निशुश्रूषया तथा । गृही स्वर्गमवाप्नोति यथा चातिथिपूजनात् ॥ २६ ॥ यदि योगी तु संप्राप्तो भिक्षार्थी समुपस्थितः । योगिनं पूजयेन्नित्यमन्यथा किल्विषी भवेत् ॥२७॥ यथा भस्म तथा मूर्खो विद्वान्प्रज्व-

लिताग्निवत् । होतव्यं च समिद्धेऽग्नौ जुहुयात्को नु भस्मनि ॥ ॥२८॥ सर्वेषामेव दानानामन्नदानं परं स्मृतम् । सर्वेषामेव जन्तूनां यतस्तज्जीवितं परम् ॥ २९ ॥ कृशाय कृतविद्याय वृत्तिक्षीणाय सीदते । अपहन्यात् क्षुधां यस्तु न तेन पुरुषः समः ॥ ३० ॥

## ब्रह्मचर्यम् ८

ब्रह्मचर्येण तपसा राजा राष्ट्रं विरक्षति । आचार्यो ब्रह्मचर्येण ब्रह्मचारिणमिच्छते ॥ १ ॥ ब्रह्मचर्येण तपसा देवा मृत्युमपाघ्नत । इन्द्रो ह ब्रह्मचर्येण देवेभ्यः स्वराभरत् ॥२॥ ब्रह्मचर्येण कन्या युवानं विन्दते पतिम् । अनड्वान् ब्रह्मचर्येणाश्वो घासं जिगीषति ॥३॥ धर्म्यं यशस्यमायुष्यं लोकद्वयरसायनम् । अनुमोदामहे ब्रह्मचर्य्यमेकान्तनिर्मलम् ॥४॥ ब्रह्मचर्य्यं परं शौचं ब्रह्मचर्य्यं परन्तपः । ये स्थिता ब्रह्मचर्येण ब्राह्मणास्ते दिवं गताः ॥ ५॥ समुद्रतरणे यद्वदुपायो नौः प्रकीर्तिता । संसारतरणे तद्वद्ब्रह्मचर्यं प्रकीर्तितम् ॥६॥ नीरोगः कान्तिसम्पन्नः सर्वदुःखविवर्जितः । ब्रह्मचारी भवेल्लोके पाप्मना च विवर्जितः ॥७॥ किं बहूक्तेन लोकेऽस्मिन्साधनं यद्धि विद्यते । ब्रह्मचर्ये तु तत्सर्वमन्तर्भवति सर्वथा ॥८॥ यथा गजपदे सर्वे पादा अन्तर्भवन्ति हि । नैतस्मादधिकं किञ्चिद् ब्रह्मचर्याद्धि विद्यते ॥ ९ ॥ सर्वसाधनसम्पन्ना ब्रह्मचर्यविवर्जिताः । क्लेशं हि मुनयो भेजुर्विद्वांसोऽपि च कोटिशः

॥१०॥ कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा । सर्वत्र मैथुनत्यागो ब्रह्मचर्यं प्रचक्षते ॥ ११ ॥ आजन्ममरणाद्यस्तु ब्रह्मचारी भवेदिह । न तस्य किञ्चिदप्राप्यमिति विद्धि नराधिप ॥ १२ ॥ ये तपश्च तपस्यन्ति कौमारा ब्रह्मचारिणः । विद्यावेदव्रतस्नाता दुर्गाण्यतितरन्ति ते ॥१३॥ सुखं दान्तः प्रस्वपिति सुखं च प्रतिबुध्यते । सुखं पर्य्येति लोकांश्च मनश्चास्य प्रसीदति ॥ १४ ॥ अदान्तः पुरुषः क्लेशमभीक्ष्णं प्रतिपद्यते । अनर्थांश्च बहूनन्यान् प्रसृजत्यात्मदोषजान् ॥ १५॥ इन्द्रियाणां विचरतां विषयेष्वपहारिषु । संयमे यत्नमातिष्ठेद्विद्वान् यन्तेव वाजिनाम् ॥१६॥ आपदां कथितः पंथा इन्द्रियाणामसंयमः । तज्जयः सम्पदां मार्गो येनेष्टं तेन गम्यताम् ॥१७॥ धर्मार्थौ यः परित्यज्य स्यादिन्द्रियवशानुगः । श्रीप्राणधनदारेभ्यः क्षिप्रं स परिहीयते ॥ १८ ॥ आहारस्य परं धाम शुक्रं तद्रक्ष्यमात्मनः । क्षये ह्यस्य बहून्दोषान्मरणं चाधिगच्छति ॥१९॥ एकः शयीत सर्वत्र न रेतः स्कन्दयेत् क्वचित् । कामाद्धि स्कन्दयन् रेतो हिनस्ति व्रतमात्मनः ॥२०॥ आयुस्तेजो बलं वीर्यं प्रज्ञा श्रीश्च महायशः । पुण्यञ्च प्रीतिमत्त्वं च हन्यतेऽब्रह्मचर्य्यया ॥ २१ ॥ ब्रह्मचर्यं परो धर्मः स चापि नियतस्त्वयि । यस्मात्तस्मादहं पार्थ रणेऽस्मिन्विजितस्त्वया ॥ २२ ॥ असिद्धं तं विजानीयान्नरं ह्यब्रह्मचारिणम् । जरामरणसंकीर्णं कायक्लेशसमन्वितम् ॥२३॥

ब्रह्मचर्यं शरीरस्य साधनं हि परं मतम् । ब्रह्मचर्यविहीनानां जीवनं हि निरर्थकम् ॥ २४ ॥ आहारशयनब्रह्मचर्य्यैर्युक्त्या प्रयोजितैः । शरीरं धार्यते नित्यमागारमिव धारणैः ॥२५॥ इन्द्रियाणां तु सर्वेषां यद्येकं क्षरतीन्द्रियम् । तेनास्य क्षरति प्रज्ञा दृतेः पात्रादिवोदकम् ॥ २६॥ यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः । इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ २७ ॥ इन्द्रियाणां निरोधेन रागद्वेषक्षयेण च । अहिंसया च भूतानाममृतत्वाय कल्पते ॥२८॥ मरणं बिन्दुपातेन जीवनं बिन्दुधारणात् । तस्माद्यतिः प्रयत्नेन कुरुते बिन्दुधारणम् ॥२९॥ यावद्बिन्दुः स्थितो देहे तावन्मृत्योर्भयं कुतः । एवं संरक्षयेद्बिन्दुं मृत्युं जयति योगवित् ॥३०॥ शुक्रं तस्माद्विशेषेण रक्षन्नारोग्यमिच्छति । धर्मार्थकाममोक्षाणामारोग्यं मूलकारणम् ॥३१॥ चित्तायत्तं नृणां शुक्रं शुक्रायत्तञ्च जीवितम् । तस्माच्छुक्रं मनश्चैव रक्षणीयं प्रयत्नतः ॥ ३२ ॥ यज्ञो ध्रुवं ब्रह्मचर्यं पुरुषार्थस्य साधनम् । ब्रह्मचर्यप्रभावेण नरः प्राप्नोति गौरवम् ॥ ३३॥ दमस्तेजो वर्धयति पवित्रं दम उत्तमम् । विपाप्मा वृद्धतेजास्तु पुरुषो विन्दते महत् ॥३४॥ दमः पवित्रं परमं माङ्गल्यं परमं दमः । दमेन सर्वमाप्नोति यत्किञ्चिन्मनसेच्छति ॥ ३५ ॥ द्विविधो ब्रह्मचारी स्यादाद्यो ह्युपकुर्वाणकः । द्वितीयो नैष्ठिकश्चैव तस्मिन्नेव व्रते स्थितः ॥ ३६॥ वेदस्वीकरणे दृष्टो गुर्वधीनो गुरोर्हितः । निष्ठां तत्रैव

यो गच्छेन्नैष्ठिकः स उदाहृतः ॥ ३७ ॥ हीनान्नवस्त्रवेषः स्यात्सर्वदा गुरुसन्निधौ । उत्तिष्ठेत्प्रथमं चास्य चरमं चैव संविशेत् ॥३८॥ नीचं शय्यासनं चास्य सर्वदा गुरुसन्निधौ। गुरोस्तु चक्षुर्विषये न यथेष्टासनो भवेत् ॥३९॥ नोदाहरेदस्य नाम परोक्षमपि केवलम् । न चैवास्यानुकुर्वीत गतिभाषितचेष्टितम् ॥ ४० ॥ अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः । आश्रमेण विना तिष्ठन् प्रायश्चित्तीयते हि सः ॥४१॥ आश्रमेषु यथोक्तेषु यथोक्तं ये द्विजातयः । वर्तन्ते संयतात्मानो दुर्गाण्यतितरन्ति ते ॥ ४२ ॥ एवं चरति यो विप्रो ब्रह्मचर्यमविप्लुतः । स गच्छत्युत्तमं स्थानं न चेह जायते पुनः ॥४३॥ चित्तायत्तं धातुबद्धं शरीरं नष्टे चित्ते धातवो यान्ति नाशम् । तस्माच्चित्तं सर्वदारक्षणीयं स्वस्थे चित्ते बुद्धयः संभवन्ति ॥ ४४ ॥ मृत्योः पदं योपयन्तो यदैत द्राघीय आयुः प्रतरं दधानाः । आप्यायमानाः प्रजया धनेन शुद्धाः पूता भवत यज्ञियासः ॥ ४५ ॥

## स्वाध्यायः ६

मिमीहि श्लोकमास्ये पर्जन्य इव ततनः । गाय गायत्रमुक्थ्यम् ॥ १॥ पाहि नो अग्न एकया पाह्युत द्वितीयया । पाहि गीर्भिस्तिसृभिरूर्जाम्पते पाहि चतसृभिर्वसो ॥ २ ॥ वेदमेवाभ्यसेन्नित्यं यथाकालमतन्द्रितः । तं ह्यस्याहुः परं धर्ममुपधर्मोऽन्य उच्यते ॥ ३॥ वेदोऽखिलो धर्ममूलं स्मृति-

शीले च तद्विदाम् । आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥
४॥ श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः। ते सर्वा-
र्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ ॥ ५ ॥ योऽवमन्येत
ते मूले हेतुशास्त्राश्रयाद्द्विजः। स साधुभिर्बहिष्कार्यो नास्तिको
वेदनिन्दकः ॥६॥ वेदाभ्यासो हि विप्राणां परमं तप उच्यते।
ब्रह्मयज्ञः स विज्ञेयः षडङ्गसहितस्तु यः ॥ ७ ॥ योऽन्यत्र
कुरुते यत्नमनधीत्य श्रुतिं द्विजः। स वै मूढो न संभाष्यो
वेदबाह्यो द्विजातिभिः ॥ ८ ॥ नास्ति वेदात्परं शास्त्रं नास्ति
मातुः परो गुरुः। नास्ति दानात्परं मित्रमिह लोके परत्र च
॥९॥ नानृग्ब्राह्मणो भवति न वणिङ् न कुशीलवः। न शूद्र-
प्रेषणं कुर्वन्न स्तेनो न चिकित्सकः ॥१०॥ ग्रामस्थानं यथा
शून्यं यथा कूपस्तु निर्जलः । यथाहुतमनग्नौ च अमन्त्रो
ब्राह्मणस्तथा ॥११॥ वेदपूर्णमुखं विप्रं सुभुक्तमपि भोजयेत्।
न च मूर्खं निराहारं षड्रात्रमुपवासिनम् ॥ १२ ॥ ऋग्यजुः
पारगो यश्च साम्नां यश्चापि पारगः । अथर्वाङ्गिरसोऽध्येता
ब्राह्मणः पंक्तिपावनः ॥१३॥ वेदमेव सदाऽभ्यस्येत्तपस्तप्स्य-
न्द्विजोत्तमः। वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते॥
१४॥ धर्मेणाधिगतो यस्तु वेदः सपरिबृंहणः । ते शिष्टा
ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥ १५ ॥ यथोक्तान्यपि
कर्माणि परिहाय द्विजोत्तमः। आत्मज्ञाने शमे च स्याद्वेदा-
भ्यासे च यत्नवान् ॥ १६ ॥ संन्यसेत्सर्वकर्माणि वेदमेकं न

संन्यसेत् । वेदसंन्यासतः शूद्रस्तस्माद्वेदं न संन्यसेत् ॥१७॥ यज्ञानां तपसाञ्चैव शुभानाञ्चैव कर्मणाम् । वेद एव द्विजातीनां निःश्रेयसकरः परः ॥ १८ ॥ बिभर्ति सर्वभूतानि वेदशास्त्रं सनातनम् । तस्मादेतत्परं मन्ये यज्जन्तोरस्य साधनम् ॥१९॥ चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक् । भूतं भव्यं भविष्यञ्च सर्वं वेदात्प्रसिध्यति ॥ २० ॥ वेदाभ्यासो ब्राह्मणस्य क्षात्रियस्य च रक्षणम् । वार्त्ता कर्मैव वैश्यस्य विशिष्टानि स्वकर्मसु ॥२१॥ वेदाभ्यासस्तपो ज्ञानं शौचमिन्द्रियनिग्रहः । धर्मक्रियात्मचिन्ता च सात्विकं गुणलक्षणम् ॥२२॥ अनुद्वेगकरं वाक्यं सत्यं प्रियहितञ्च यत् । स्वाध्यायाभ्यसनञ्चैव वाङ्मयन्तप उच्यते ॥२३॥ वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रिया क्षमा । नाशयन्त्याशु पापानि महापातकजान्यपि ॥२४॥ अधीत्य यत्किञ्चिदपि वेदार्थाधिगमे रतः । स्वर्गलोकमवाप्नोति धर्मानुष्ठानविद्द्विजः ॥ २५ ॥ वेदशास्त्रार्थतत्वज्ञो यत्र तत्राश्रमे वसन् । इहैव लोके तिष्ठन्स ब्रह्मभूयाय कल्पते ॥२६॥ यथा जातबलो वह्निर्दहत्यार्द्रानपि द्रुमान् । तथा दहति वेदज्ञः कर्मजं दोषमात्मनः ॥ २७ ॥ स्वाध्याये नित्ययुक्तः स्याद्दान्तो मैत्रः समाहितः । दाता नित्यमनादाता सर्वभूतानुकम्पकः ॥ २८ ॥ यः स्वाध्यायमधीतेऽब्दं विधिना नियतः शुचिः । तस्य नित्यं क्षरत्येष पयो दधि घृतं मधु ॥२९॥ वेदोपकरणे चैव स्वाध्याये चैव नैत्यके । नानु-

रोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि ॥३०॥ स्वाध्यायाद्यो-
गमासीत योगात्स्वाध्यायमामनेत् । स्वाध्याययोगसम्पत्त्या
परमात्मा प्रकाशते ॥३१॥ एकोऽपि वेदविद्धर्मं यं व्यवस्येद्
द्विजोत्तमः । स विज्ञेयः परो धर्मो नाज्ञानामुदितोऽयुतैः ॥
३२॥ अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् । सहस्रशः
समेतानां परिषत्त्वं न विद्यते ॥ ३३ ॥ सर्वेषामेव दानानां
ब्रह्मदानं विशिष्यते । वार्यन्नगोमहीवासस्तिलकाञ्चनसर्पि-
षाम् ॥३४॥ सर्वान्परित्यजेदर्थान् स्वाध्यायस्य विरोधिनः।
यथा तथाऽध्यापयंस्तु सा ह्यस्य कृतकृत्यता ॥ ३५॥ यथा
काष्ठमयो हस्ती यथा चर्ममयो मृगः । यश्च विप्रोऽनधीया-
नस्त्रयस्ते नाम बिभ्रति ॥३६॥ योऽनधीत्य द्विजो वेदमन्यत्र
कुरुते श्रमम् । स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥
३७ ॥ यथा षण्ढोऽफलः स्त्रीषु यथा गौर्गवि चाफला ।
यथा चाज्ञेऽफलं दानं तथा विप्रोऽनृचोऽफलः ॥ ३८॥ गो-
भूतिलहिरण्यादि पात्रे दातव्यमर्चितम् । नापात्रे विदुषा
किञ्चिदात्मनः श्रेय इच्छता ॥३९॥ यथेरिणे बीजमुप्त्वा न
वप्ता लभते फलम् । तथाऽनृचे हविर्दत्त्वा न दाता लभते
फलम् ॥४०॥ या वेद बाह्याः स्मृतयो याश्च काश्च कुदृष्टयः।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हिताः स्मृताः ॥४१॥
श्रेयान् द्रव्यमयाद्यज्ञाद् ज्ञानयज्ञः परन्तप । सर्वकर्माखिलं
पार्थ ज्ञाने परिसमाप्यते ॥ ४२ ॥ न हि ज्ञानेन सदृशं पवित्र-

मिह विद्यते। तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति।४३।

## दान-धर्माः १०

यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि। तवेत्तत्सत्यमङ्गिरः ॥१॥ दानतो वैरिणोऽपि स्युर्मित्राण्येव न संशयः। दाने सर्वमिदं विश्वं प्रतितिष्ठति सर्वदा ॥२॥ प्रशंसन्ति प्रजा नित्यं कर्णबल्यादिकानिह। वदान्या दानतः स्वर्गं व्रजन्ति सततं नराः ॥३॥ यज्ञाः संपूर्णतां यान्ति दानतो दक्षिणात्मनः। दातारं सर्वभूतानि श्रयन्ति पितरं यथा ॥४॥ दानेन प्राप्यते स्वर्गो दानेन सुखमश्नुते। इहामुत्र च दानेन पूज्यो भवति मानवः ॥५॥ दानेन भूतानि वशीभवन्ति दानेन वैराण्यपि यान्ति नाशम्। परोऽपि बन्धुत्वमुपैति दानैर्दानं हि सर्वव्यसनानि हन्ति ॥६॥ न दानतः किञ्चिदिहान्यदस्ति जनस्य दुःखक्षतये निमित्तम्। संवर्धनीयं तदतः प्रयत्नान्निरन्तरं मित्रमिवोपकारि ॥ ७ ॥ गौरवं प्राप्यते दानान्न तु वित्तस्य संचयात्। स्थितिरुच्चैः पयोदानां पयोधीनामधः स्थितिः ॥८॥ यद्ददाति यदश्नाति तदेव धनिनो धनम्। अन्ये मृतस्य क्रीडन्ति दारैरपि धनैरपि ॥९॥ यद्ददासि विशिष्टेभ्यो यच्चाश्नासि दिने दिने। तत्ते वित्तमहं मन्ये शेषमन्यस्य रक्षसि ॥ १०॥ भवन्ति नरकाः पापात्पापं दारिद्र्यसंभवम्। दारिद्र्यमप्रदानेन तस्माद्दानपरो भवेत् ॥ ११ ॥ ग्रासादपि तदर्धञ्च कस्मान्नो दीयतेऽर्थिषु। इच्छानुरूपो विभवः कदा कस्य

भविष्यति ॥१२॥ अनुकूले विधौ देयं यतः पूरयिता हरिः। प्रतिकूले विधौ देयं यतः सर्वं हरिष्यति ॥१३॥ उपार्जितानां वित्तानां त्याग एव हि रक्षणम्। तडागोदरसंस्थानां परीवाह इवाम्भसाम् ॥१४॥ आयासशतलब्धस्य प्राणेभ्योऽपि गरीयसः। गतिरेकैव वित्तस्य दानमन्या विपत्तयः ॥१५॥ दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य। यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥१६॥ यो न ददाति न भुङ्क्ते सति विभवे नैव तस्य तद्द्रव्यम्। तृणमयकृत्रिमपुरुषो रक्षति सस्यं परस्यार्थे ॥१७॥ दातव्यं भोक्तव्यं सति विभवे संग्रहो न कर्तव्यः। पश्यामि मधुकरीणां संचितमर्थं हरन्त्यन्ये ॥१८॥ विद्यायां दुर्मदो येषां कार्पण्यं विभवे सति। तेषां दैवाभिशप्तानां सलिलादग्निरुत्थितः ॥१९॥ यस्य दानविहीनस्य धनान्यायान्ति यान्ति किम्। आरण्यकुसुमानीव निरर्थास्तस्य सम्पदः ॥२०॥ द्वाविमौ पुरुषौ राजन् स्वर्गस्योपरि तिष्ठतः। प्रभुश्च क्षमया युक्तो दरिद्रश्च प्रदानवान् ॥२१॥ द्वावम्भसि निवेष्टव्यौ गले बद्ध्वा दृढां शिलाम्। धनवन्तमदातारं दरिद्रञ्चातपस्विनम् ॥ २२ ॥ मितं भुङ्क्ते संविभज्याश्रितेभ्यो मितं स्वपित्यमितं कर्म कृत्वा। ददात्यमित्रेष्वपि याचितः संस्तमात्मवन्तं प्रजहत्यनर्थाः ॥ २३ ॥ त्यागो गुणो गुणशतादधिको मतो मे विद्या विभूषयति तं यदि किं ब्रवीमि। शौर्यं हि नाम यदि तत्र नमोऽस्तु तस्मै

तच्च त्रयं न च मदोऽस्ति विचित्रमेतत् ॥२४॥ अष्टौ गुणाः पुरुषं दीपयन्ति प्रज्ञा च कौल्यञ्च दमः श्रुतञ्च । पराक्रमश्चाबहुभाषिता च दानं यथाशक्ति कृतज्ञता च ॥२५॥ दानं प्रियवाक्सहितं ज्ञानमगर्वं क्षमाऽन्वितं शौर्यम् । वित्तं दानसमेतं दुर्लभमेतच्चतुर्भद्रम् ॥ २६ ॥ अर्थाः पादरजःसमा गिरिनदीवेगोपमं यौवनं आयुष्यं जलबिन्दुलोलचपलं फेनोपमं जीवनम् । दानं यो न करोति निश्चलमतिर्भोगं न भुङ्क्ते च यः पश्चात्तापयुतो जरापरिगतः शोकाग्निना दह्यते ॥ २७ ॥ विप्रेभ्यः साधु दानं रिपुजनसुहृदाश्चोपकारान्कुरु त्वं सौजन्यं बन्धुवर्गे निजहितमुचितं स्वामिकार्यं यथार्थम् । श्रोत्रे ते तथ्यमेतत्कथयाति सततं लेखनी भाग्यशालिन् नो चेन्नष्टेऽधिकारे मम मुखसदृशं तावकास्यं भवेद्धि ॥२८॥ पात्रे दानं स्वल्पमपि काले दत्तं युधिष्ठिर । मनसा हि विशुद्धेन प्रेत्यानन्तफलं स्मृतम् ॥ २९ ॥ अपात्रेभ्यस्तु दत्तानि दानानि सुबहून्यपि । वृथा भवन्ति राजेन्द्र भस्मन्याज्याहुतिर्यथा ।३०। पात्रापात्रविवेकोऽस्ति धेनुपन्नगयोर्यथा । तृणात्संजायते क्षीरं क्षीरात्संजायते विषम् ॥ ३१ ॥ पात्रेभ्यो दीयते नित्यमनपेक्ष्य प्रयोजनम् । केवलं त्यागबुद्ध्या यत् धर्मदानं तदुच्यते ॥ ३२ ॥ सुक्षेत्रे वापयेद्बीजं सुपात्रे निक्षिपेद्धनम् । सुक्षेत्रे च सुपात्रे च ह्युप्तं दत्तं न नश्यति ॥ ३३ ॥ न विद्यया केवलया तपसा वापि पात्रता । यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम् ॥३४॥

दातव्यमितियद्दानं दीयतेऽनुपकारिणे । देशे काले च पात्रे
च तद्दानं सात्विकं स्मृतम् ॥३५॥ यद्यदिष्टतमं लोके यच्चास्य
दयितं गृहे । तत्तद्गुणवते देयं तदेवाक्षयमिच्छता ॥ ३६ ॥
प्रियाणि लभते नित्यं प्रियदः प्रियकृत्तथा । प्रियो भवति
भूतानामिह चैव परत्र च ॥ ३७॥ अमित्रमपि चेद्दीनं शरणै-
षिणमागतम् । व्यसने योऽनुगृह्णाति स वै पुरुषसत्तमः ॥३८॥
ईश्वरा भूरिदानेन यल्लभन्ते फलं किल । दरिद्रस्तच्च काकिण्या
प्राप्नुयादिति नः श्रुतम् ॥३९॥ न्यायार्जितधनश्चापि विधि-
वद्यत्प्रदीयते । अर्थिभ्यः श्रद्धया युक्तं दानमेतदुदाहृतम् ॥
४०॥ अपहृत्य परस्यार्थान्यः परेभ्यः प्रयच्छति । स दाता
नरकं याति यस्यार्थास्तस्य तत्फलम् ॥४१॥ सार्थः प्रवसतो
मित्रं भार्या मित्रं गृहे सतः । आतुरस्य भिषङ्मित्रं दानं मित्रं
मरिष्यतः ॥४२॥ अभिगम्योत्तमं दानमाहूतश्चैव मध्यमम् ।
अधमं याच्यमानं स्यात्सेवादानन्तु निष्फलम् ॥ ४३ ॥
चत्वारो धनदायादा धर्माग्निनृपतस्कराः । तेषां ज्येष्ठावमानेन
त्रयः कुप्यन्ति बान्धवाः ॥ ४४ ॥ विद्यमाने धने लोभाद्दान-
भोगविवर्जितः । पश्चान्नास्तीति यो ब्रूयात्सोऽक्षयं नरकं व्रजेत्
॥४५॥ स्थितो मृत्युमुखे चाहं क्षणमायुर्ममास्ति न । इति
मत्वा दानधर्मौ यथेष्टौ तु समाचरेत् ॥ ४६ ॥ येन केन
प्रकारेण यस्य कस्यापि देहिनः । संतोषं जनयेत् प्राज्ञस्त-
देवेश्वरपूजनम् ॥४७॥ दानं वाचस्तथा बुद्धेर्वित्तस्य विविधस्य

च । शरीरस्य च कुत्रापि केचिदिच्छन्ति पण्डिताः ॥ ४८ ॥ न्यायागतस्य द्रव्यस्य बोद्धव्यौ द्वावतिक्रमौ । अपात्रे प्रतिपत्तिश्च पात्रे चाप्रतिपादनम् ॥ ४९ ॥ गोदुग्धं वाटिकापुष्पं विद्या कूपोदकं धनम् । दानाद्विवर्द्धते नित्यमदानाच्च विनश्यति ॥ ५० ॥ हिरण्यदानं गोदानं पृथिवीदानमेव च । एतानि वै पवित्राणि तारयन्त्यपि दुष्कृतम् ॥५१॥ पानीयं परमं दानं दानानां मनुरब्रवीत् । तस्मात्कूपांश्च वापीश्च तडागानि च खानयेत् ॥५२॥ जलाशयाश्च वृक्षाश्च विश्रामगृहमध्वनि । सेतुः प्रतिष्ठितो येन तेन सर्वं वशीकृतम् ॥५३॥ वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः । तिलदश्च प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ॥५४॥ भूमिदो भूमिमाप्नोति दीर्घमायुर्हिरण्यदः । गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूप्यमुत्तमम् ॥५५॥ एतानि पुरुषव्याघ्र साधुभ्यो देहि नित्यदा । दानानीह परं पापान्मोक्षयन्ति न संशयः ॥५६॥ देयं भेषजमार्तस्य परिश्रान्तस्य चासनम् । तृषितस्य च पानीयं क्षुधितस्य च भोजनम् ॥५७॥ अन्नाद्बलञ्च तेजश्च प्राणिनां वर्द्धते सदा । अन्नदानमतो हेतोः श्रेष्ठमाह प्रजापतिः ॥५८॥ यस्मादन्नात्प्रजाः सर्वाः कल्पे कल्पेऽसृजत्प्रभुः । तस्मादन्नात्परन्दानं न भूतं न भविष्यति ॥५९॥ अन्नदानं परन्दानं विद्यादानमतः परम् । अन्नेन क्षणिका तृप्तिर्यावज्जीवन्तु विद्यया ॥६०॥

## स्त्रीधर्माः ११ ॥

सा भार्या या गृहे दक्षा सा भार्या या प्रजावती । सा भार्या या पतिप्राणा सा भार्या या पतिव्रता ॥१॥ भर्ता हि परमं नार्या भूषणं भूषणैर्विना । एषा विरहिता तेन शोभमाना न शोभते ॥२॥ श्वश्रूश्वशुरयोः पादौ जोषन्ती सुगुणान्विता । मातापितृपरा नित्यं या नारी सा तपोधना ॥३॥ भर्ता देवो गुरुर्भर्ता धर्मतीर्थव्रतानि च । तस्मात्सर्वं परित्यज्य पतिमेकं भजेत्सती ॥४॥ नेक्षेत्पतिं क्रूरदृष्ट्या श्रावयेन्नैव दुर्वचः । नाप्रियं मनसा वाऽपि चरेत्पत्युः पतिव्रता ॥५॥ सुस्वभावा सुवचना सुव्रता सुखदर्शना । अनन्यचित्ता सुमुखी भर्तुः सा धर्मचारिणी ॥६॥ मितं ददाति हि पिता मितं भ्राता मितं सुतः । अमितस्य प्रदातारं भर्तारं का न पूजयेत् ॥७॥ नास्ति भर्तृसमो नाथो नास्ति भर्तृसमं सुखम् । विसृज्य धनसर्वस्वं भर्ता वै शरणं स्त्रियः ॥८॥ छायेवानुगता स्वच्छा सखीव हितकर्मसु । दासीवादिष्टकार्येषु भार्या भर्तुः सदा भवेत् ॥ ९ ॥ सदा प्रहृष्टया भाव्यं गृहकार्येषु दक्षया । सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया ॥ १० ॥ नातन्त्री विद्यते वीणा नाचक्रो विद्यते रथः । नापतिः सुखमेधेत या स्यादपि शतात्मजा ॥ ११ ॥ नास्ति यज्ञः स्त्रियः किञ्चिन्न व्रतं नोपवासकम् । या हि भर्तुश्च शुश्रूषा तया स्वर्गं जयत्यसौ ॥१२॥ मण्डनं वर्जयेन्नित्यं तथा प्रोषितभर्तृका । धारयेन्-

मङ्गलार्थानि किञ्चिदाभरणानि च । देवताराधनपरा तिष्ठेद्भर्तृ-
हिते रता ॥१३॥ कार्येषु मन्त्री करणेषु दासी भोज्येषु माता
शयनेषु रम्भा । धर्मानुकूला क्षमया धरित्री षाड्गुण्यमेतद्धि
पतिव्रतानाम् ॥१४॥ पानं दुर्जनसंसर्गः पत्या च विरहोऽट-
नम् । स्वप्नमन्यगृहे वासो नारीणां दूषणानि षट् ॥ १५ ॥
पत्यौ जीवति या योषिदुपवासव्रतं चरेत् । आयुः सा हरते
भर्तुर्नरकं चैव गच्छति ॥ १६ ॥ नित्यं स्नाता सुगन्धा च
नित्यं च प्रियवादिनी । अल्पभुक्ताल्पवक्त्री च देवता सा न
मानुषी ॥१७॥ यस्य भार्या शुचिर्दक्षा भर्तारमनुगामिनी ।
नित्यं मधुरवक्त्री च सा रमा न रमा रमा ॥१८॥ उत्पाद-
नमपत्यस्य जातस्य परिपालनम् । प्रत्यहं लोकयात्रायाः प्रत्यक्षं
स्त्रीनिबन्धनम् ॥१९॥ काममामरणात्तिष्ठेद् गृहे कन्यर्तुमत्यपि ।
न चैवनां प्रयच्छेत्तु गुणहीनाय कर्हिचित् ॥२०॥ पतिशुश्रू-
षणान्नार्यास्तपो नान्यद्विधीयते । सावित्री पतिशुश्रूषां कृत्वा
स्वर्गे महीयते ॥२१॥ इमं धर्मपथं नारी पालयन्ती समाहिता ।
अरुन्धतीव नारीणां स्वर्गे लोके महीयते ॥२२॥ वैषम्यमपि
संप्राप्ता गोपायन्ति कुलस्त्रियः । आत्मानमात्मना सत्यो जितः
स्वर्गो न संशयः ॥२३॥ कार्यार्थे निर्गतञ्चापि भर्तारं गृह-
मागतम् । आसनेनोपसंयोज्य पूजयेत्सुसमाहिता ॥ २४ ॥
यदन्नं नाभिजानाति यद्भोज्यं नाभिनन्दति । भक्ष्यं वा यदि
वा लेह्यं तत्सर्वं वर्जयेत्सती ॥२५॥ नोत्थापयति भर्तारं सुख-

सुप्तमियं सदा । अन्तरेष्वपि कार्येषु तेन तुष्यति तन्मनः ॥
२६॥ श्रुत्वा स्वरं द्वारगतस्य भर्तुः प्रत्युत्थिता तिष्ठ गृहस्य
मध्ये । दृष्ट्वा प्रविष्टं त्वरिताऽऽसनेन पाद्येन चैनं प्रतिपूज-
यस्व ॥२७॥ महाकुलीनाभिरपापिकाभिः स्त्रीभिः सतीभिस्तव
सख्यमस्तु । चण्डाश्च शौण्डाश्च महाशनाश्च चौराश्च दुष्टाश्च-
पलाश्च वर्ज्याः ॥२८॥ दह्यमाना मनो दुःखैर्व्याधिभिश्चातुरा
नराः । ह्लादन्ते स्वेषु दारेषु घर्मार्ताः सलिलेष्विव ॥२९॥
आत्मनो जन्मनः क्षेत्रं पुण्यं रामाः सनातनम् । ऋषीणामपि
का शक्तिः स्रष्टुं रामामृते प्रजाम् ॥ ३० ॥ न च भार्यासमं
किञ्चिद्विद्यते भिषजां मतम् । औषधं सर्वदुःखेषु सत्यमे-
तद्ब्रवीमि ते ॥ ३१ ॥ नास्ति भार्यासमो बन्धुर्नास्ति भार्या-
समा गतिः । नास्ति भार्यासमो लोके सहायो धर्मसंग्रहे ॥
३२ ॥ अर्द्धं भार्या मनुष्यस्य भार्या श्रेष्ठतमः सखा । अस-
हायस्य लोकेऽस्मिन् लोकयात्रासहायिनी॥३३॥ कान्तारेष्वपि
विश्रामो जनस्य गृहिणी मता । यः सदारः स विश्वास्यस्त-
स्माद्दाराः परा गतिः ॥ ३४ ॥ अनुकूलां विमलाङ्गीं कुलजां
कुशलां सुशीलसंपन्नाम् । एतादृशीं सुभार्यां पुरुषः पुण्योदया-
ल्लभते ॥३५॥ अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत् ।
शौचे धर्मेऽन्नपक्त्यां च पारिणाह्यस्य चेक्षणे ॥३६॥ यादृशं
भजते हि स्त्री सुतं सूते तथाविधम् । तस्मात्प्रजाविशुद्ध्यर्थं
स्त्रियं रक्षेत्प्रयततः ॥३७॥ उत्सवे लोकयात्रायां तीर्थेष्वन्य-

निकेतने । न पत्नीं प्रेषयेत्प्राज्ञः पुत्रामात्यविवर्जिताम् ॥३८॥ पुरा कल्पे कुमारीणां मौञ्जीबन्धनमिष्यते । अध्यापनं च वेदानां सावित्रीवचनं तथा ॥३९॥ साऽहं तस्मिन्कुले जाता भर्तर्यसति मद्विधे । विनीता मोक्षधर्मेषु चराम्येका मुनिव्रतम् ॥४०॥ शाश्वतोऽयं धर्मपथः सद्भिराचरितः सदा । यद्भार्याः परिरक्षन्ति भर्तारो निर्बला अपि ॥४१॥ पूजनीया महाभागाः पुण्याश्च गृहदीप्तयः । स्त्रियः श्रियो गृहस्योक्तास्तस्माद्रक्ष्या विशेषतः ॥ ४२ ॥ पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा । पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः ॥४३॥ शोचन्ति जामयो यत्र विनश्यत्याशु तत्कुलम् । न शोचन्ति तु यत्रैता वर्द्धते तद्धि सर्वदा ॥४४॥ तस्मादेताः सदा पूज्या भूषणाच्छादनाशनैः । भूतिकामैर्नरैर्नित्यं सत्कारेषूत्सवेषु च ॥ ४५॥ स्त्रियां तु रोचमानायां सर्वं तद्रोचते कुलम् । तस्यान्त्वरोचमानायां सर्वमेव न रोचते ॥ ४६ ॥ अन्योन्यस्याव्यभिचारो भवेदामरणान्तिकः । एष धर्मः समासेन ज्ञेयः स्त्रीपुंसयोः परः ॥४७॥ तथा नित्यं यतेयातां स्त्रीपुंसौ तु कृतक्रियौ । यथा नाभिचरेतां तौ वियुक्तावितरेतरम् ॥ ४८ ॥ प्रजनार्थं स्त्रियः सृष्टाः सन्तानार्थञ्च मानवाः । तस्मात्साधारणो धर्मः श्रुतौ पत्न्या सहोदितः ॥४९॥ सन्तुष्टो भार्यया भर्ता भर्त्रा भार्या तथैव च । यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै

ध्रुवम् ॥५०॥ सा क्षौमवसना हृष्टा नित्यं व्रतपरायणा। अग्निं जुहोति स्म तदा मन्त्रवत्कृतमङ्गला ॥५१॥

## अहिंसा १२ ॥

य आमं मांसमदन्ति पौरुषेयञ्च ये क्रविः। गर्भान् खादन्ति केशवस्तानितो नाशयामसि ॥ १ ॥ सुरा मत्स्याः पशोर्मांसं द्विजादीनां बलिस्तथा। धूर्तैः प्रवर्तितं यज्ञे नैतद्वेदेषु कथ्यते ॥२॥ मांसभक्षैः सुरापानैर्मूर्खैश्चाक्षरवर्जितैः। पशुभिः पुरुषाकारैर्भाराक्रान्ताऽस्ति मेदिनी ॥ ३ ॥ यक्षरक्षः पिशाचान्नं मद्यं मांसं सुराऽऽसवम्। तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविः ॥ ४ ॥ स्वमांसं परमांसेन यो वर्धयितुमिच्छति। नास्ति क्षुद्रतरस्तस्मात्स नृशंसतरो नरः ॥५॥ न भक्षयति यो मांसं न च हन्यान्न घातयेत्। तन्मित्रं सर्वभूतानां मनुः स्वायम्भुवोऽब्रवीत् ॥६॥ नहि मांसं तृणात्काष्ठादुपलाद्वाऽपि जायते। हत्वा जन्तुं ततो मांसं तस्माद्दोषस्तु भक्षणे ॥७॥ यो हि खादति मांसानि प्राणिनां जीवितैषिणाम्। हतानां वा मृतानां वा यथा हन्ता तथैव सः ॥८॥ यदि चेत्खादको न स्यान्न तदा घातको भवेत्। घातकः खादकार्थाय तद्घातयति वै नरः ॥९॥ धनेन क्रयिको हन्ति खादकश्चोपभोगतः। घातको वधबन्धाभ्यामित्येषस्त्रिविधो वधः ॥१०॥ अनुमन्ता विशसिता निहन्ता क्रयविक्रयी। संस्कर्ता चोपहर्ता च खादकश्चेति घातकाः ॥११॥ मां स

भक्षयिताऽमुत्र यस्य मांसमिहाद्म्यहम् । एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः ॥१२॥ लोभाद्वा बुद्धिमोहाद्वा बलवीर्यार्थमेव वा । संसर्गाद्वाऽथ पापानामधर्मरुचिता नृणाम् ॥१३॥ भक्षयित्वाऽपि यो मांसं पश्चादपि निवर्तते । तस्यापि सुमहान्धर्मो यः पापाद्विनिवर्तते ॥१४॥ न तत्परस्य संदध्यात्प्रतिकूलं यदात्मनः । एष संक्षेपतो धर्मः कामादन्यत्प्रवर्तते ॥१५॥ अहिंसकानि भूतानि दण्डेन विनिहन्ति यः । आत्मनः सुखमन्विच्छन्स प्रेत्य न सुखी भवेत् ॥ १६ ॥ शुक्राच्च तात संभूतिर्मांसस्येह न संशयः । भक्षणे तु महान्दोषो निवृत्त्या पुण्यमुच्यते ॥१७॥ कर्मणा मनसा वाचा सर्वभूतेषु सर्वदा । अक्लेशजननं प्रोक्तमहिंसात्वेन योगिभिः ॥ १८ ॥ अहिंसा सत्यवचनमानृशंस्यं दमो घृणा । एतत्तपो विदुर्धीरा न शरीरस्य शोषणम् ॥ १९ ॥ आत्मनः प्रतिकूलानि परेभ्यो यदि नेच्छसि । परेषां प्रतिकूलेभ्यो निवर्त्तय ततो मनः ॥२०॥ जीवितं यः स्वयं चेच्छेत्कथं सोऽन्यं प्रघातयेत् । यद्यदात्मनि चेच्छेत्ततत्परस्यापि चिन्तयेत् ॥ २१ ॥ सुखं वा यदि वा दुःखं यत्किञ्चित्क्रियते परे । ततस्तत्तु पुनः पश्चात्सर्वमात्मनि जायते ॥ २२ ॥ यथैवात्मा परस्तद्वद्द्रष्टव्यः सुखमिच्छता । सुखदुःखानि तुल्यानि यथात्मनि तथा परे ॥२३॥ अपहृत्यार्त्तिमार्त्तानां सुखं यदुपजायते । तस्य स्वर्गोऽपवर्गो वा कलां नार्हति षोडशीम् ॥२४॥ वेदाभ्यासेन सततं शौचेन तपसैव

च । अद्रोहेण च भूतानां जातिं स्मरति पौर्विकीम् ॥२५॥ मधु मांसं च ये नित्यं वर्जयन्तीह धार्मिकाः । जन्मप्रभृति मद्यं च सर्वे ते मुनयः स्मृताः ॥२६॥ कृमयो भस्म विष्ठा वा निष्ठा यस्येयमीदृशी । स कायः परतापाय युज्यतामिति को नयः ॥२७॥ सर्वाणि भूतानि सुखे रमन्ते सर्वाणि दुःखस्य भृशं त्रसन्ते । तेषां भयोत्पादनजातखेदः कुर्यान्न कर्माणि हि श्रद्दधानः ॥२८॥ न गोप्रदानं न महीप्रदानं न चान्नदानं हि तथा प्रधानम् । यथा वदन्तीह बुधाः प्रधानं सर्वप्रदानेष्वभयप्रदानम् ॥२९॥ यथा हि ते जीवितमात्मनः प्रियं तथा परेषामपि जीवितं प्रियम् । संरक्षसे जीवितमात्मनो यथा तथा परेषामपि रक्ष जीवितम् ॥३०॥

## जीवितसाफल्यम् १३ ॥

वाणी रसवती यस्य भार्या पुत्रवती सती । लक्ष्मीर्दानवती यस्य सफलं तस्य जीवितम् ॥१॥ धर्मार्थकाममोक्षाणां यस्यैकोऽपि न विद्यते । अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥२॥ दाने तपसि शौर्ये च यस्य न प्रथितं यशः । विद्यायामर्थलाभे च मातुरुच्चार एव सः ॥ ३ ॥ स जीवति गुणा यस्य धर्मो यस्य स जीवति । गुणधर्मविहीनो यो निष्फलं तस्य जीवितम् ॥ ४ ॥ स जातो येन जातेन याति वंशः समुन्नतिम् । परिवर्तिनि संसारे मृतः को वा न जायते ॥५॥ दानोपभोगरहिता दिवसा यस्य यान्ति वै । स लोह-

कारभस्त्रेव श्वसन्नपि न जीवति ॥ ६ ॥ यस्य जीवन्ति धर्मेण पुत्रा मित्राणि बान्धवाः । सफलं जीवितं तस्य नात्मार्थे को हि जीवति॥७॥ दानं वित्तादृतं वाचः कीर्तिधर्मौ तथाऽऽयुषः। परोपकरणं कायादसारात्सारमाहरेत् ॥ ८ ॥ यस्मिन् जीवति जीवन्ति बहवः स तु जीवति । काकोऽपि किन्न कुरुते चंच्वा स्वोदरपूरणम् ॥९॥ परोपकरणं येषां जागर्ति हृदये सताम् । विपदश्चैव नश्यन्ति सम्पदः स्युः पदे पदे ॥१०॥ आत्मार्थं जीवलोकेऽस्मिन्को न जीवति मानवः । परं परोपकारार्थं यो जीवति स जीवति ॥ ११ ॥ दधीचिना पुरा गीतः श्लोकश्च श्रूयते भुवि । सर्वधर्ममयः सारः सर्वधर्मज्ञसंमतः ॥ १२ ॥ परोपकारः कर्तव्यः प्राणैः कण्ठगतैरपि । परोपकारजं पुण्यं न स्यात्क्रतुशतैरपि ॥१३॥ धनानि जीवितञ्चैव परार्थे प्राज्ञ उत्सृजेत्। तन्निमित्तो वरं त्यागो विनाशे नियते सति ॥१४॥ रविश्चन्द्रो घना वृक्षा नदी गावश्च सज्जनाः। एते परोपकाराय युगे दैवेन निर्मिताः ॥ १५ ॥ तृणञ्चाहं वरं मन्ये नरादनुपकारिणः। घासो भूत्वा पशून्पाति भीरून्पाति रणाङ्गणे ॥१६॥ परोपकारो देहेन भवेच्चेत्किमतः परम् । देहिनः करणीयं स्याज्ज्ञातं देहफलं यतः ॥ १७ ॥ गच्छतास्तिष्ठतो वाऽपि जाग्रतः स्वपतोऽपि वा । यन्न भूतहितार्थाय तत्पशोरिव चेष्टितम् ॥१८॥ कृते प्रत्युपकारो यो वणिग्धर्मो न साधुता। तत्रापि ये न कुर्वन्ति पशवस्ते न मानुषाः ॥ १९ ॥ मातुः

किन्तेन जातेन यस्यात्माऽपीह दुर्भरः । समर्थो नोपकारी चेत्तस्यापि जननेन किम् ॥२०॥ एष मे प्रवरो भाति शुद्ध-धर्मप्रदो विधिः । परोपकरणादन्यत्सर्वमल्पं स्मृतं बुधैः ॥ २१॥ परोपकारशून्यस्य धिङ्मनुष्यस्य जीवितम् । धन्यास्ते पशवो येषां चर्माप्युपकरिष्यति ॥ २२ ॥ जीवितान्मरणं श्रेष्ठं परोपकृतिवर्जितात् । मरणं जीवितं मन्ये यत्परोपकृतिक्षमम् ॥२३॥ चलं चित्तं चलं वित्तं चले जीवितयौवने । चलाचलमिदं सर्वं कीर्तिर्यस्य स जीवति ॥ २४ ॥ पशवोऽपि हि जीवन्ति केवलात्मोदरम्भराः । स पुनर्जीवितश्लाघ्यो यः परार्थं हि जीवति ॥२५॥ अञ्जनस्य क्षयं दृष्ट्वा वल्मीकस्य तु संचयम् । अवन्ध्यं दिवसं कुर्याद्दानाध्ययनकर्मसु ॥ २६ ॥ यदि प्राण्युपकाराय देहोऽयं नोपयुज्यते । ततः किमुपकारोऽस्य प्रत्यहं क्रियते वृथा ॥२७॥ अनेन मर्त्यदेहेन यल्लोकद्वयशर्मदम् । विचिन्त्य तदनुष्ठेयं कर्म हेयं ततोऽन्यथा ॥ २८॥ सज्जनाः परोपकारं शूराः शस्त्रं धनं कृपणाः । कुलवत्यो मन्दाक्षं प्राणात्यय एव मुञ्चन्ति ॥ २९ ॥ यस्य जना न वदन्ति महत्त्वं नो समरे मरणं विजयं वा । न श्रुतदानमहाधनतां वा तस्य भवः कृमिकीटसमानः ॥३०॥ पिबन्ति नद्यः स्वयमेव नाम्भः स्वयं न खादन्ति फलानि वृक्षाः । नादन्ति सस्यं खलु वारिवाहाः परोपकाराय सतां विभूतयः ॥३१॥ रत्नाकरः किं कुरुते हि रत्नैर्विन्ध्याचलः किं करिभिः

करोति । श्रीखण्डखण्डैर्मलयाचलः किं परोपकाराय सतां विभूतयः ॥३२॥ भवन्ति नम्रास्तरवः फलोद्गमैर्नवाम्बुभिर्भूरिविलम्बिनो घनाः । अनुद्धताः सत्पुरुषाः समृद्धिभिः स्वभाव एवैष परोपकारिणाम् ॥ ३३ ॥ श्रोत्रं श्रुतेनैव न कुण्डलेन दानेन पाणिर्न तु कङ्कणेन । विभाति कायः खलु सज्जनानां परोपकारेण न चन्दनेन ॥ ३४ ॥ पद्माकरं दिनकरो विकचं करोति चन्द्रो विकासयति कैरवचक्रवालम् । नाभ्यर्थितो जलधरोऽपि जलन्ददाति सन्तः स्वयं परहितेषु कृताभियोगा- ॥३५॥ पतत्यवश्यं हि विकृष्यमाणं कालेन यत्नादपि रक्ष्यमाणम् । वर्ष्माऽमुना सिध्यति चेत्परार्थः स एव मर्त्यस्य परः पुमर्थः ॥ ३६ ॥ दातुः परोपकृतिनिर्भरचित्तवृत्तेरासन्नदूरगणना नहि संश्रितेषु । भानुर्विकासयति हन्त सरोजखण्डं पाणिस्थपङ्कजसमं भुवनान्तरेषु ॥३७॥ किं चन्द्रमाः प्रत्युपकारलिप्सया करोति गोभिः कुमुदावबोधनम् । स्वभाव एवोन्नतचेतसां सतां परोपकारव्यसनं हि जीवितम् ॥ ३८ ॥ जीवितं तदपि जीवितमध्ये गण्यते सुकृतिभिः किमु पुंसाम् । ज्ञानविक्रमकलाकुललज्जात्यागभोगरहितं विफलं यत् ।३९। यो नात्मजे न च गुरौ न च भृत्यवर्गे दीने दयां न कुरुते न च बन्धुवर्गे । किन्तस्य जीवितफलं हि मनुष्यलोके काकोऽपि जीवति चिराय बलिञ्च भुङ्क्ते ॥ ४० ॥ अचिन्त्यरूपो भगवान्निरञ्जनो विश्वम्भरो ज्ञानमयश्चिदात्मा । वि-

चिन्तितो येन हृदि क्षयं नो वृथा गतं तस्य नरस्य जीवितम् ॥ ४१ ॥ ब्रह्मादिदेवोऽखिलविश्वदेवो मोक्षप्रदोऽतीतगुणः प्रशान्तः । धृतो न योगेन हृदि स्वकीये वृथा गतं० ॥४२॥ आनन्दरूपो निजबोधरूपो दिव्यस्वरूपो बहुनामरूपः । तपः समाधौ कलितो न येन वृथा० ॥ ४३ ॥ इदं शरीरं परमार्थसाधनं धर्मैकहेतुं बहुपुण्यलब्धम् । लब्धाऽपि यो नो विदधीत धर्मं वृथा० ॥ ४४ ॥ धर्मार्थकामानपि मोक्षमुच्चैर्ददाति या शुभ्रतराश्च कीर्तिम् । सा येन विद्याऽधिगता न यत्नतो वृथा०॥४५॥ तपोभिरुग्रैरपि दुर्लभां नृणां सत्सङ्गतिं पुण्यवशादुपेत्य यः । नोद्धारयेत्संसृतितः स्वमात्महो वृथागतं तस्य नरस्य जीवितम् ॥४६॥

## सदाचारः १४

आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः। आचाराद्धनमक्षय्यमाचारो हन्त्यलक्षणम् ॥१॥ सर्वलक्षणहीनोपि यःसदाचारवान्नरः । श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति ॥२॥ आचाराद्विच्युतो विप्रो न वेदफलमश्नुते । आचारेण तु संयुक्तः संपूर्णफलभाग्भवेत् ॥ ३ ॥ दुराचारो हि पुरुषो लोके भवति निन्दितः। दुःखभागी च सततं व्याधितोऽल्पायुरेव च ॥४॥ वृत्तं यत्नेन रक्ष्यं स्याद्वित्तमेति च याति च । अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ॥५॥ आचारो भूतिजनन आचारः कीर्तिवर्धनः । आचाराद्वर्धते ह्यायुराचारो

हन्त्यलक्षणम् ॥६॥ आगमानां हि सर्वेषामाचारः श्रेष्ठः उच्यते। आचारप्रभवो धर्मो धर्मादायुर्विवर्धते ॥७॥ न योनिर्नापि संस्कारो न श्रुतं न च सन्ततिः। कारणानि द्विजत्वस्य वृत्तमेव तु कारणम् ॥ ८ ॥ किं कुलेन विशालेन शीलमेवात्र कारणम्। कृमयः किं न जायन्ते कुसुमेषु सुगन्धिषु ॥ ९ ॥ कुलानि समुपेतानि गोभिः पुरुषतोऽर्थतः। कुलसंख्यां न गच्छन्ति यानि हीनानि वृत्ततः ॥ १० ॥ वृत्ततस्त्वविहीनानि कुलान्यल्पधनान्यपि। कुलसंख्यां च गच्छन्ति कर्षन्ति च महद्यशः ॥११॥ अनिज्यया कुविवाहैर्वेदस्योत्सादनेन च। कुलान्यकुलतां यान्ति धर्मस्यातिक्रमेण च ॥१२॥ अकुलीनः कुलीनो वा मर्यादां यो न लङ्घयेत्। धर्मापेक्षी मृदुर्दान्तः स कुलीनशताद्वरः ॥१३॥ चतुर्वेदोऽपिदुर्वृत्तः स शूद्रादतिरिच्यते। योऽग्निहोत्रपरो दान्तः स ब्राह्मण इति स्मृतः ॥ १४ ॥ ज्यायांसमपि शीलेन विहीनं नैव पूजयेत्। अपि शूद्रश्च धर्मज्ञं सद्वृत्तमभिपूजयेत् ॥१५॥ यस्तु शूद्रो दमे सत्ये धर्मे च सततोत्थितः। तं ब्राह्मणमहं मन्ये वृत्तेन हि भवेद् द्विजः ॥१६॥ कर्मशीलगुणाः पूज्यस्तथा जातिकुले नहि। न जात्या न कुलेनैव श्रेष्ठत्वं प्रतिपद्यते ॥ १७ ॥ शीलं प्रधानं पुरुषे तद्यस्येह प्रणश्यति। न तस्य जीवितेनार्थो न धनेन न बन्धुभिः ॥ १८ ॥ संस्कृतोऽपि दुराचारो नरकं याति मानवः। निःसंस्कारः सदाचारो भवेद्विप्रोत्तमः सदा ॥१९॥ न कुलेन न

जात्या वा क्रियाभिर्ब्राह्मणो भवेत् । चाण्डालोऽपि हि वृत्तस्थो ब्राह्मणः स युधिष्ठिर ॥२०॥ जातिमात्रेण किं कश्चिद्धन्यते पूज्यते क्वचित् । व्यवहारं परिज्ञाय वध्यः पूज्योऽथवा भवेत् ॥२१॥ शूद्रोऽपि शीलसंपन्नो ब्राह्मणादधिको भवेत् । ब्राह्मणो विगताचारः शूद्राद्धीनतरो भवेत् ॥ २२ ॥ आचारः परमो धर्मः श्रुत्युक्तः स्मार्त एव च । तस्मादस्मिन्सदायुक्तो नित्यं स्यादात्मवान् द्विजः ॥२३॥ आचारप्रभवो धर्मः सन्तश्चाचारलक्षणाः । साधूनाञ्च यथावृत्तं सदाचारः स उच्यते ॥२४॥ अनभ्यासेन वेदानामाचारस्य च वर्जनात् । आलस्यादन्नदोषाच्च मृत्युर्विप्राञ्जिघांसति ॥२५॥ न मे स्तेनो जनपदे न कदर्य्यो न मद्यपः । नानाहिताग्निर्नाविद्वान्न स्वैरी स्वैरिणी कुतः ॥ २६ ॥ वेदबाह्यव्रताचाराः श्रौतस्मार्तबहिष्कृताः । पाखण्डिन इतिख्याता न संभाष्या द्विजातिभिः ॥ २७ ॥ पाखण्डिनो विकर्मस्थान्वैडालवृत्तिकान्शठान् । हैतुकान्बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ॥२८॥ ये नास्तिका निष्क्रियाश्च गुरुशास्त्रातिलंघिनः । अधर्मज्ञा दुराचारस्ते भवन्ति गतायुषः ॥२९॥ आचारहीनं न पुनन्ति वेदा यद्यप्यधीताः सह षड्भिरङ्गैः । छन्दांस्येनं मृत्युकाले त्यजन्ति नीडं शकुन्ता इव जातपक्षाः ॥३०॥

## विद्या १५

विद्याधनं श्रेष्ठधनं तन्मूलमितरद्धनम् । दानेन वर्द्धते नित्यं

न भाराय न नीयते ॥१॥ विद्या सर्वमनुष्याणां जननी नापरा स्मृता । जातोऽनया पुमान्यस्माद्गच्छेल्लोकद्वये सुखम् ॥२॥ विद्या रूपं कुरूपाणां क्षमा रूपं तपस्विनाम् । कोकिलानां स्वरो रूपं स्त्रीणां रूपं पतिव्रतम् ॥३॥ सर्वद्रव्येषु विद्यैव द्रव्यमाहुरनुत्तमम् । अहार्यत्वादनर्घ्यत्वादक्षयत्वाच्च सर्वदा ॥४॥ हर्तुर्न गोचरं याति दत्ता भवति विस्तृता । कल्पान्तेऽपि न या नश्येत्किमन्यद्विद्यया समम् ॥५॥ अपूर्वः कोऽपि कोषोऽयं विद्यते तव भारति । व्ययतो वृद्धिमायाति क्षयमायाति सञ्चयात् ॥ ६ ॥ सद्विद्या यदि का चिन्ता वराकोदरपूरणे । शुकोऽप्यशनमाप्नोति हरे राम इति ब्रुवन् ॥७॥ विद्या ददाति विनयं विनयाद्याति पात्रताम् । पात्रत्वाद्धनमाप्नोति धनाद्धर्मन्ततः सुखम् ॥ ९ ॥ विद्यया शस्यते लोके पूज्यते चोत्तमैः सदा । विद्याहीनो नरः प्राज्ञसभायां नैव शोभते ॥९॥ गतेऽपि वयसि ग्राह्या विद्या सर्वात्मना बुधैः । यद्यपि स्यान्न फलदा सुलभा साऽन्यजन्मनि ॥ १० ॥ नक्षत्रभूषणं चन्द्रो नारीणां भूषणं पतिः । पृथिवीभूषणं राजा विद्या सर्वस्य भूषणम् ॥ ११ ॥ यथा खनन्खनित्रेण नरो वार्यधिगच्छति । तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति ॥ १२ ॥ यथा यथा हि पुरुषः शास्त्रं समधिगच्छति । तथा तथा विजानाति विज्ञानञ्चास्य रोचते ॥१३॥ तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तये । आयासायापरं कर्म विद्याऽन्या शिल्पनैपुणम् ।१४।

श्रुत्वा धर्मं विजानाति श्रुत्वा त्यजति दुर्मतिम्। श्रुत्वा ज्ञानमवाप्नोति श्रुत्वा मोक्षञ्च विन्दति ॥ १५ ॥ वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी । एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम् ॥१६॥ धर्माधर्मौ न जानाति लोकोऽयं विद्यया विना । तस्मात्सदैव धर्मात्मा विद्यादानपरो भवेत् ॥१७॥ कामधेनुगुणा विद्या ह्यकाले फलदायिनी। प्रवासे मातृसदृशी विद्या गुप्तं धनं स्मृतम् ॥१८॥ तपो विद्या च विप्रस्य निःश्रेयसकरं परम् । तपसा किल्बिषं हन्ति विद्ययाऽमृतश्नुते ॥ १९ ॥ अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम् । सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः ॥ २० ॥ मातृपितृकृताभ्यासो गुणितामेति बालकः । न गर्भच्युतिमात्रेण पुत्रो भवति पण्डितः ॥ २१ ॥ शुनः पुच्छमिव व्यर्थं जीवितं विद्यया विना। न गुह्यगोपने शक्तं न च दंशनिवारणे ॥२२॥ विद्या मित्रं प्रवासेषु भार्या मित्रं गृहेषु च । व्याधितस्यौषधं मित्रं धर्मो मित्रं मृतस्य च ॥ २३ ॥ सुखार्थी यस्त्यजेद्विद्यां विद्यार्थी वा त्यजेत्सुखम् । सुखार्थिनः कुतो विद्या कुतो विद्यार्थिनः सुखम् ॥२४॥ गुरुशुश्रूषया विद्या पुष्कलेन धनेन, वा । अथवा विद्यया विद्या चतुर्थं नैव साधनम् ॥ २५॥ बालादपि गृहीतव्यं युक्तमुक्तं मनीषिभिः । रवेरविषये किन्न प्रदीपस्य प्रकाशनम् ॥२६॥ परं पलितकायेन कर्तव्यः श्रुतसंग्रहः । न तत्र धनिनो यान्ति यत्र यान्ति बहुश्रुताः॥२७॥

किं कुलेन विशालेन विद्याहीनस्य देहिनः । विद्यावान्पूज्यते लोके नाविद्यः परिपूज्यते ॥२८॥ पुरुषं साहसक्लेशाद्यर्जनायासकारिणम् । लक्ष्मीर्विमुञ्चति क्वापि विद्याऽभ्यस्ता न मुञ्चति ॥२९॥ किं तस्य मानुषत्वेन बुद्धिर्यस्य न निर्मला । बुद्ध्याऽपि किं फलन्तस्य येन विद्या न सञ्चिता ॥३०॥ विद्यया विनयाऽवाप्तिः सा चेदविनयावहा । किं कुर्मः कम्प्रति ब्रूमो गरदायां स्वमातरि ॥ ३१ ॥ यस्येदं जन्म पाश्चात्त्यं तमाश्वेव महामते । विशन्ति विमला विद्या मुक्ता वेणुमिवोत्तमम् ॥३२॥ हा हा पुत्रक नाधीतं सुगतैतासु रात्रिषु । तेन त्वं विदुषां मध्ये पङ्के गौरिव सीदसि ॥३३॥ पुस्तकेषु च नाधीतं नाधीतं गुरुसन्निधौ । न शोभते सभामध्ये हंसमध्ये बको यथा ॥३४॥ बाढं गुणवती विद्या न मुदे विनयं विना । मूर्खताऽपि मुदे भूयान्महत्सु विनयान्विता ॥३५॥ पुस्तकस्था तु या विद्या परहस्तगतं धनम् । कार्यकाले समुत्पन्ने न सा विद्या न तद्धनम् ॥ ३६ ॥ प्रथमे नार्जिता विद्या द्वितीये नार्जितं धनम् । तृतीये नार्जितं पुण्यं चतुर्थे किं करिष्यति ॥३७॥ भानुर्वै जायते लक्ष्म्या सरस्वत्याऽपि जायते । उभयोरपि संयोगो न प्रायो दृश्यते भुवि ॥ ३८ ॥ धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा । तत्र विद्या न वक्तव्या शुभं बीजमिवोषरे ॥३९॥ यः पठति लिखति पश्यति परिपृच्छति पण्डितानुपाश्रयति । तस्य दिवाकरकिरणैर्नलिनी-

दलमिव विकास्यते बुद्धिः ॥४०॥ निरक्षरे वीक्ष्य महाधनत्वं विद्याऽनवद्या विदुषा न हेया। रत्नावतंसाः कुलटाः समीक्ष्य किमार्यनार्यः कुलटा भवन्ति ॥४१॥ न चोरहार्यं न च राजहार्यं न भ्रातृभाज्यं न च भारकारि। व्यये कृते वर्धत एव नित्यं विद्याधनं सर्वधनप्रधानम् ॥४२॥ वसुमतीपतिना नु सरस्वती बलवता रिपुणाऽपि न नीयते। समविभागहरैर्न विभज्यते विविधबोधबुधैरपि सेव्यते ॥४३॥ मातेव रक्षति पितेव हिते नियुंक्ते कान्तेव चाभिरमयत्यपनीय खेदम्। लक्ष्मीन्तनोति वितनोति च दिक्षु कीर्तिं किं किन्न साधयति कल्पलतेव विद्या ॥४४॥ विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः। विद्या बन्धुजनो विदेशगमने विद्या परन्दैवतं विद्या राजसु पूज्यते नहि धनं विद्याविहीनः पशुः ॥४५॥ विद्या नाम नरस्य कीर्तिरतुला भाग्यक्षये चाश्रयो धेनुः कामदुघा रतिश्च विरहे नेत्रं तृतीयञ्च सा। सत्कारायतनं कुलस्य महिमा रत्नैर्विना भूषणं तस्मादन्यमुपेक्ष्य सर्वविषयं विद्याऽधिकारं कुरु ॥४६॥ हर्तुर्याति न गोचरं किमपि शं पुष्णाति सर्वात्मना ह्यर्थिभ्यः प्रतिपाद्यमानमनिशं प्राप्नोति वृद्धिं पराम्। कल्पान्तेष्वपि न प्रयाति निधनं विद्याख्यमेतद्धनं येषां तान्प्रति मानमुज्झत नृपाः कस्तैः सह स्पर्धते ॥४७॥ केयूरा न विभूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वला न

स्नानं न विलेपनं न कुसुमं नालंकृता मूर्धजाः । वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषणम् ॥४८॥ क्षान्तिश्चेद्वचनेन किं किमरिभिः क्रोधोऽस्ति चेद्देहिनां ज्ञातिश्चेदनलेन किं यदि सुहृद्दिव्यौषधैः किं फलम् । किं सर्पैर्यदि दुर्जनः किमु धनैर्विद्याऽनवद्या यदि व्रीडा चेत्किमु भूषणैः सुकविता यद्यस्ति राज्येन किम् ॥ ४९ ॥ अस्त्यद्यापि चतुःसमुद्रपरिखापर्यन्तमुर्वीतलं वर्तन्तेऽपि च तत्र तत्र रसिका गोष्ठीषु सक्ता नृपाः । एकस्तत्र निरादरो भवति चेदन्यो भवेत्सादरो वाग्देवी वदनाम्बुजे वसति चेत्को नाम दीनो जनः ॥५०॥ इडा सरस्वती मही तिस्रो देवीर्मयोभुवः । बर्हिः सीदन्त्वस्रिधः ॥ ५१ ॥

## पण्डितः १६ ॥

पण्डिते हि गुणाः सर्वे मूर्खे दोषाश्च केवलाः । तस्मान्मूर्खसहस्रेभ्यः प्राज्ञ एको विशिष्यते ॥ १ ॥ प्राज्ञो हि जल्पतां पुँसां श्रुत्वा वाचः शुभाशुभाः । गुणवद्वाक्यमादत्ते हंसः क्षीरमिवाम्भसः ॥२॥ शोकस्थानसहस्राणि भयस्थानशतानि च । दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥३॥नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम् । आपत्स्वपि न मुह्यन्ति नराः पण्डितबुद्धयः ॥ ४ ॥ निषेवते प्रशस्तानि निन्दितानि न सेवते । अनास्तिकः श्रद्धान एतत्पण्डितलक्षणम् ॥५॥ क्रोधो हर्षश्च दर्पश्च ह्रीस्तम्भो मान्यमानिता ।

यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते ॥६॥ यस्य कृत्यं न जानन्ति मन्त्रं वा मन्त्रितं परे । कृतमेवास्य जानन्ति स वै पण्डित उच्यते ॥७॥ यस्य कृत्यं न विघ्नन्ति शीतमुष्णं भयं रतिः । समृद्धिरसमृद्धिर्वा स वै पण्डित उच्यते ॥ ८ ॥ निश्चित्य यः प्रक्रमते नान्तर्वसति कर्मणः । अवन्ध्यकालो वश्यात्मा स वै पण्डित उच्यते ॥ ९ ॥ आर्यकर्माणि रज्यन्ते भूतिकर्माणि कुर्वते । हितञ्च नाभ्यसूयन्ति पण्डिता भरतर्षभ ॥१०॥ न हृष्यत्यात्मसंमाने नावमानेन तप्यते । गाङ्गो ह्रद इवाक्षोभ्यो यः स पण्डित उच्यते ॥११॥ प्रवृत्तवाक् चित्र-कथ ऊहवान्प्रतिभानवान् । आशु ग्रन्थस्य वक्ता च यः स पण्डित उच्यते ॥ १२ ॥ आत्मज्ञानं समारम्भस्तितिक्षा धर्म-नित्यता । यमर्था नापकर्षन्ति स वै पण्डित उच्यते ॥१३॥ अर्थं महान्तमासाद्य विद्यामैश्वर्यमेव वा । विचरत्यसमुन्नद्धो यः स पण्डित उच्यते ॥ १४ ॥ किं कुलेन विशालेन विद्या-हीनस्य देहिनः । अकुलीनोऽपि यो विद्वान्देवैरपि स पूज्यते ॥१५॥ कच्चित्सहस्रैर्मूर्खाणामेकं क्रीणासि पण्डितम् । पण्डितो ह्यर्थकृच्छ्रेषु कुर्यान्निःश्रेयसं परम् ॥ १६ ॥ यत्र विद्वज्जनो नास्ति श्लाघ्यस्तत्राल्पधीरपि । निरस्तपादपे देशे एरण्डोऽपि द्रुमायते ॥ १७ ॥ विद्वानेव विजानाति विद्वज्जनपरिश्रमम् । नहि वन्ध्या विजानाति गुर्वीं प्रसववेदनाम् ॥ १८ ॥ स्वगृहे पूज्यते मूर्खः स्वग्रामे पूज्यते प्रभुः । स्वदेशे पूज्यते राजा

विद्वान्सर्वत्र पूज्यते ॥ १९॥ विद्वत्त्वञ्च नृपत्वञ्च नैव तुल्यं कदाचन । स्वदेशे पूज्यते राजा विद्वान्सर्वत्र पूज्यते ॥२०॥ विप्रोऽपि यो भवेन्मूर्खः स पुराद्बहिरस्तु मे । कुम्भकारोऽपि यो विद्वान्स तिष्ठतु पुरे मम ॥ २१ ॥ सविद्यः पुरुषः श्रेष्ठो यत्र कुत्रापि तिष्ठति । तत्रैव भवति श्रीमान् पूजापात्रञ्च भूभुजाम् ॥ २२॥ सेनापत्यञ्च राज्यञ्च दण्डनेतृत्वमेव च । सर्वलोकाधिपत्यञ्च वेदशास्त्रविदर्हति ॥ २३ ॥ पण्डितो हि वरं शत्रुर्न मूर्खो हितकारकः । वानरेण हतो राजा विप्र-चौरेण रक्षितः ॥२४॥ मातृवत्परदारांश्च परद्रव्याणि लोष्ठ-वत् । आत्मवत्सर्वभूतानि यः पश्यति स पश्यति ॥ २५ ॥ विद्यावृद्धान् सदैव त्वमुपासीथा युधिष्ठिर । शृणुयास्ते च यद्ब्रूयुः कुर्याश्चैवाविचारयन् ॥ २६ ॥ प्रातरुत्थाय तान् राजन् पूजयित्वा यथाविधि । कृत्यकाले समुत्पन्ने पृच्छेथाः कार्यमात्मनः ॥ २७ ॥ ते तु संमानिता राजंस्त्वया कार्य-हितार्थिना । प्रवक्ष्यन्ति हितं तात सर्वथा तव भारत ॥२८॥ विद्याविनयोपेतो हरति न चेतांसि कस्य मनुजस्य । काञ्चन-मणिसंयोगो नो जनयति कस्य लोचनानन्दम् ॥२९॥ यद्यपि भवति कुरूपो वस्त्रालङ्कारवेषपरिहीनः । सज्जनसभां प्रविष्टो राजति विद्याऽधिकः पुरुषः ॥ ३० ॥ विद्वत्कवयः कवयः केवलकवयस्तु केवलं कपयः । कुलजा या सा जाया केवल-जाया तु केवलं माया ॥ ३१ ॥ न पण्डिताः साहसिका

भवन्ति श्रुत्वाऽपि ते संतुलयन्ति तत्वम् । तत्वं समादाय समाचरन्ति स्वार्थं प्रकुर्वन्ति परस्य चार्थम् ॥३२॥ संपूर्ण-कुम्भो न करोति शब्दमर्धो घटो घोषमुपैति नूनम् । विद्वा-न्कुलीनो न करोति गर्वं गुणैर्विहीना बहु जल्पयन्ति ॥३३॥ क्षिप्रं विजानाति चिरं शृणोति विज्ञाय चार्थं भजते न कामात् । नासंपृष्टो व्युपयुंक्ते परार्थे तत्प्रज्ञानं प्रथमं पण्डितस्य ॥३४॥ इभतुरगरथैः प्रयान्तु मूढा धनरहिता विबुधाः प्रयान्तु पद्भ्याम् । गिरिशिखरगताऽपि काकपंक्तिः पुलिनगतैर्न समा हि राजहंसैः ॥ ३५ ॥ उदीरितोऽर्थः पशुनापि गृह्यते हयाश्च नागाश्च वहन्ति चोदिताः । अनुक्तमप्यूहति पण्डितो जनः परेङ्गितज्ञानफला हि बुद्धयः ॥ ३६ ॥ विद्याविलास-मनसो धृतशीलशिक्षाः सत्यव्रता रहितमानमलापहाराः । संसारदुःखदलनेन सुभूषिता ये धन्या नरा विहितकर्मपरो-पकाराः ॥ ३७ ॥ अन्या जगद्धितमयी मनसः प्रवृत्तिरन्यैव काऽपि रचना वचनावलीनाम् । लोकोत्तरा च कृतिराकृति-रार्यहृद्या विद्यावतां सकलमेव गिरां दवीयः ॥ ३८ ॥ वैद्यं पानरतं नटं कुपठितं स्वाध्यायहीनं द्विजं योधं कापुरुषं हयं गतरयं मूर्खं परिव्राजकम् । राजानं च कुमन्त्रिभिः परिवृतं देशञ्च सोपद्रवं भार्यां यौवनगर्विताां पररतां मुञ्चन्ति ते पण्डिताः॥३९॥अधिगतपरमार्थान्पण्डितान्माऽवमंस्थास्तृण-मिव लघुलक्ष्मीर्नैव तान्संरुणद्धि । अभिनवमदलेखाश्याम-

गण्डस्थलानां न भवति बिसतन्तुवारणं वारणानाम् ॥४०॥

## मूर्खः १७ ॥

वरं पर्वतदुर्गेषु भ्रान्तं वनचरैः सह । न मूर्खजनसंसर्गः सुरेन्द्रभुवनेष्वपि ॥१॥ मूर्खस्य पञ्च चिह्नानि गर्वो दुर्वचनं तथा । हठी चैव विषादी च परोक्तं नैव मन्यते ॥२॥ मूर्खो हि जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः । अशुभं वाक्यमादत्ते पुरीषमिव सूकरः ॥३॥ मूर्खोऽपि मूर्खं दृष्ट्वा च चन्दनादपि शीतलः । यदि पश्यति विद्वांसं मन्यते पितृघातकम् ॥४॥ उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये । पयःपानं भुजङ्गानां केवलं विषवर्धनम् ॥५॥ वरं शरावहस्तस्य चाण्डालागारवीथिषु । भिक्षार्थमटनं राम न मौर्ख्यहतजीवितम् ॥ ॥ ६ ॥ अत्यन्ताचारोऽनाचारोऽत्यन्तनिन्दाऽतिसंस्तुतिः । अतिशौचमशौचं वा षड्विधं मूर्खलक्षणम् ॥ ७ ॥ अश्रुतश्च समुन्नद्धो दरिद्रश्च महामनाः । अर्थांश्चाकर्मणा प्रेप्सुर्मूढ इत्युच्यते बुधैः ॥८॥ अनाहूतः प्रविशति ह्यपृष्टो बहु भाषते । अविश्वस्ते विश्वसिति मूढचेता नराधमः ॥९॥ अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च । कर्म चारभते दुष्टं तमाहुर्मूढचेतसम् ॥१०॥ परं क्षिपति दोषेण वर्तमानः स्वयं तथा । यश्च क्रुध्यत्यनीशानः स च मूढतमो नरः ॥११॥मदोपशमनं शास्त्रं खलानां कुरुते मदम् । चक्षुःप्रकाशकं तेज उलूकानामिवान्धताम् ॥१२॥ शोभते विदुषां मध्ये नैव निर्गुणमानसः ।

अन्तरे तमसां दीपः शोभते नार्कतेजसाम् ॥ १३ ॥ काव्यशास्त्रविनोदेन कालो गच्छति धीमताम् । व्यसनेन तु मूर्खाणां निद्रया कलहेन वा ॥ १४ ॥ यस्य नास्ति विवेकस्तु केवलं यो बहुश्रुतः । न स जानाति शास्त्रार्थान्दर्वी पाकरसानिव ॥ ॥१५॥ न व्याधिर्न विषं नापत्तथा नाधिश्च भूतले । खेदाय स्वशरीरस्थं मौर्ख्यमेकं यथा नृणाम् ॥१६॥ न लोके राजते मूर्खः केवलात्मप्रशंसया । अपि चेह मृजाहीनः कृतविद्यः प्रकाशते ॥ १७ ॥ गुणदोषावशास्त्रज्ञः कथं विभजते जनः । किमन्धस्याधिकारोऽस्ति रूपभेदोपलब्धिषु ॥१८॥ मूर्खोऽपि शोभते तावत्सभायां वस्त्रवेष्टितः । तावच्च शोभते मूर्खो यावत्किञ्चिन्न भाषते ॥१९॥ दूरतः शोभते मूर्खो लम्बशाटपटावृतः । तावच्च शोभते मूर्खो यावत्किञ्चिन्न भाषते ॥२०॥ यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् । लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥ २१ ॥ रूपयौवनसंपन्ना विशालकुलसम्भवाः । विद्याहीना न शोभन्ते निर्गन्धा इव किंशुकाः ॥२२॥ माता शत्रुः पिता वैरी बालो येन न पाठितः । न शोभते सभामध्ये हंसमध्ये बको यथा ॥२३॥ अन्तःसारविहीनस्य सहायः किं करिष्यति । मलयेऽपि स्थितो वेणुर्वेणुरेव न चन्दनः ॥ २४ ॥ मूर्खः स्वल्पव्ययत्रासात्सर्वनाशं करोति हि । कः सुधीः संत्यजेद्भाण्डं शुल्कस्यैवातिसाध्वसात् ॥२५॥ अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ।

ज्ञानलवदुर्विदग्धं ब्रह्मापि तं नरं न रञ्जयति ॥२६॥ येषां न विद्या न तपो न दानं ज्ञानं न शीलं न गुणो न धर्मः । ते मर्त्यलोके भुवि भारभूता मनुष्यरूपेण मृगाश्चरन्ति ॥२७॥ मुक्ताफलैः किं मृगपक्षिणां च मिष्टान्नपानं किमु गर्दभानाम् । अन्धस्य दीपो वधिरस्य गीतं मूर्खस्य किं धर्मकथाप्रसङ्गैः ॥२८॥ स्वायत्तमेकान्तगुणं विधात्रा विनिर्मितं छादनमज्ञतायाः । विशेषतः सर्वविदां समाजे विभूषणं मौनमपण्डितानाम् ॥२९॥ शास्त्राण्यधीत्यापि भवन्ति मूर्खा यस्तु क्रियावान्पुरुषः स विद्वान् । सुचिन्तितं चौषधमातुराणां न नाममात्रेण करोत्यरोगम् ॥ ३० ॥ सत्यं तपो ज्ञानमहिंसता च विद्वत्प्रणामश्च सुशीलता च । एतानि यो धारयते स विद्वान्न केवलं यः पठते स विद्वान् ॥३१॥ अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः । दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथाऽन्धाः ॥ ३२ ॥ गच्छन्न खादामि हसन्न जल्पे गतं न शोचामि कृतं न मन्ये । द्वयोस्तृतीयो न भवामि राजन् केनास्मि मूर्खो वद कारणेन॥३३ वरं दरिद्रः श्रुतिशास्त्रपारगो न चापि मूर्खो बहुरत्नसंयुतः । सुलोचना जीर्णपटाऽपि शोभते न नेत्रहीना कनकैरलंकृता ॥ ॥३४॥ काव्यं करोतु परिजल्पतु संस्कृतानि सर्वाः कलाः समधिगच्छतु वाच्यमानाः । लोकस्थितिं यदि न वेत्ति यथावदित्थं सर्वस्य मूर्खनिकरस्य स चक्रवर्ती ॥ ३५ ॥ किं

गर्जितेन वृषभेण पराजितेन किं कोकिलस्वरकृतेन विना वसन्तम् । किं कातरेण बहुशस्त्रपरिग्रहेण किं जीवितेन पुरुषेण निरक्षरेण ॥३६॥ यदा किञ्चिज्ज्ञोऽहं द्विप इव मदान्धः समभवं तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः । यदा किञ्चित्किंचिद्बुधजनसकाशादवगतं तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ॥ ३७॥ मूर्खत्वं सुलभं भजस्व कुमते मूर्खस्य चाष्टौ गुणाः, निश्चिन्तो बहुभोजनोऽतिमुखरो रात्रिन्दिवा स्वप्नभाक् । कार्याकार्यविचारणान्धबधिरो मानापमाने समः, प्रायेणामयवर्जितो दृढवपुर्मूर्खः सुखं जीवति ॥ ३८॥ शक्यो वारयितुं जलेन हुतभुक् छत्रेण सूर्यातपो, नागेन्द्रो निशितांकुशेन समदो दण्डेन गोगर्दभौ । व्याधिर्भेषजसंग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषं, सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्योषधम् ॥३९॥ मीमांसा पठिता न यैरुपनिषन्नैव श्रुता तत्वतः, श्रीमद्वैदिकभाष्यतो भगवती गीताऽप्यधीता न यैः । सिद्धान्तापगतं शिरोमणिमतं ज्ञात्वाऽपि किंचित्ततो, भट्टाचार्यपदं गताः कथमहो लज्जां लभन्ते न ते ॥४०॥

## सज्जनस्वभावः १८ ॥

अथा ते अन्तमानां विद्याम सुमतीनाम् । मा नो अतिख्य आगहि ॥१॥ सुमुखाः सर्वभूतानां प्रशान्ताः शंसितव्रताः । सेव्याः सन्मार्गवक्तारः पुण्यश्रवणदर्शनाः॥२॥ अञ्जलिस्थानि पुष्पाणि वासयन्ति करद्वयम् । अहो सुमनसां वृत्तिर्वामद-

क्षिणयोः समा ॥३॥ किमत्र चित्रं यत्सन्तः परानुग्रहतत्पराः । नहि स्वदेहशैत्याय जायन्ते चन्दनद्रुमाः ॥ ४ ॥ धनिनोऽपि निरुन्मादा युवानोऽपि न चञ्चलाः । प्रभवोऽप्यप्रमत्तास्ते महामहिमशालिनः ॥५॥ संपदो महतामेव महतामेव चापदः । वर्द्धते क्षीयते चन्द्रो न तु तारागणः क्वचित् ॥ ६ ॥ अहो किमपि चित्राणि चरित्राणि महात्मनाम् । लक्ष्मीं तृणाय मन्यन्ते तद्भारेण नमन्त्यपि ॥७॥ वज्रादपि कठोराणि मृदूनि कुसुमादपि । लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥ ८॥ विकृतिं नैव गच्छन्ति सङ्गदोषेण साधवः । आवेष्टितं महासर्पैश्चन्दनं न विषायते ॥९॥ सज्जनं व्यजनं मन्ये चारुवंशसमुद्भवम् । आत्मानञ्च परिश्राम्य परतापनिवारणम् ॥ १०॥ सद्भिस्तु लीलया प्रोक्तं शिलालिखितमक्षरम् । असद्भिः शपथेनापि जले लिखितमक्षरम् ॥ ११ ॥ नारिकेलसमाकारा दृश्यन्तेऽपि च सज्जनाः । अन्ये वदरिकाकारा बहिरेव मनोहराः ॥१२॥ परोपदेशे पाण्डित्यं सर्वेषां सुकरं नृणाम् । धर्मे स्वीयमनुष्ठानं कस्यचित्सुमहात्मनः ॥१३॥ यथा चित्तं तथा वाचो यथा वाचस्तथा क्रियाः । चित्ते वाचि क्रियायाञ्च साधूनामेकरूपता ॥ १४ ॥ उपकर्तुं प्रियं वक्तुं कर्तुं स्नेहमकृत्रिमम् । सुजनानां स्वभावोऽयं केनेन्दुः शिशिरीकृतः ॥ १५॥ निर्गुणेष्वपि सत्वेषु दयां कुर्वन्ति साधवः । नहि संहरते ज्योत्स्नां चन्द्रश्चाण्डालवेश्मनः ॥१६॥ उपकारिषु यः साधुः

साधुत्वे तस्य को गुणः । अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ॥१७॥ स्वभावं नैव मुञ्चन्ति सन्तः संसर्गतोऽसताम् । न त्यजन्ति रुतं मञ्जु काकसंपर्कतः पिकाः ॥१८॥ स्वगुणान्परदोषांश्च वक्तुं प्रार्थयितुं परान् । याचितारं निराकर्तुं सतां जिह्वा जडायते ॥ १९॥ पातितोऽपि कराघातैरुत्पतत्येव कन्दुकः । प्रायेण साधुवृत्तानामस्थायिन्यो विपत्तयः ॥ २० ॥ प्राणा यथात्मनोऽभीष्टा भूतानामपि ते तथा । आत्मौपम्येन भूतेषु दयां कुर्वन्ति साधवः ॥२१॥ कुसुमस्तबकस्येव द्वे वृत्ती स्तो मनस्विनः । मूर्ध्नि वा सर्वलोकस्य विशीर्येत वनेऽथवा ॥२२॥ स्थिरा शैली गुणवतां खलबुद्ध्या न बाध्यते । रत्नदीपस्य हि शिखा वात्ययाऽपि न नाश्यते ॥ २३॥ उदये सविता रक्तो रक्तश्चास्तमये तथा । सम्पत्तौ च विपत्तौ च महतामेकरूपता ॥ २४ ॥ विवेकः सह सम्पत्त्या विनयो विद्यया सह । प्रभुत्वं प्रश्रयोपेतं चिह्नमेतन्महात्मनाम् ॥२५॥ स्वभावं न जहात्येव साधुरापद्गतोऽपि सन् । कर्पूरः पावकस्पृष्टः सौरभं लभतेतराम् ॥ २६॥ वित्ते त्यागः क्षमा शक्तौ दुःखे दैन्यविहीनता । निर्दम्भता सदाचारे स्वभावोऽयं महात्मनाम् ॥२७॥ परुषञ्च न भाषन्ते सदा सन्तो द्विजप्रियाः । न्यायोपेता गुणोपेताः सर्वलोकहितैषिणः॥२८॥ न स्मरन्त्यपराद्धानि स्मरन्ति सुकृतान्यपि । असंभिन्नार्यमर्यादाः साधवः पुरुषोत्तमाः ॥२९॥ शैले शैले न माणिक्यं

मौक्तिकं न गजे गजे । साधवो नहि सर्वत्र चन्दनं न वने वने ॥३०॥ सुलभाः पुरुषा लोके साधवः साधुकारिषु । असाधुषु पुनः साधुर्दुर्लभः पुरुषो भुवि ॥३१॥ ते साधवः सुजन्मानस्तैरियं भूषिता धरा । अपकारिषु भूतेषु ये भवन्त्युपकारिणः ॥३२॥ यस्य चित्तं द्रवीभूतं कृपया सर्वजन्तुषु । स धन्यः संसृतौ पुण्यः किं जटाभस्मवल्कलैः ॥३३॥ शिष्टाचारः प्रियो येषु दमो येषु प्रतिष्ठितः । सुखं दुःखं समं येषां सत्यं येषां परायणम् ॥ ३४ ॥ न धनार्थं यशोऽर्थं वा धर्मस्तेषां युधिष्ठिर । अवश्यं कार्य्यं इत्येव शरीरस्य क्रियास्तथा ॥३५॥ न भयं क्रोधचापल्ये न शोकस्तेषु विद्यते । न धर्मध्वजिनश्चैव न गुह्यं किञ्चिदास्थिताः ॥३६॥ आमरणान्ताः प्रणयाः कोपास्तत्क्षणभङ्गुराः। परित्यागाश्च निःसङ्गा भवन्ति हि महात्मनाम् ॥३७॥ दन्तिदन्तसमानं हि निःसृतं महतां वचः । कूर्मग्रीवेव नीचानां पुनरायाति याति च ॥३८॥ सज्जना एव साधूनां प्रथयन्ति गुणोत्करम्।पुष्पाणां सौरभं प्रायस्तनुते दिक्षु मारुतः ॥ ३९ ॥ कर्तव्यमाचरन्कार्यमकर्तव्यमनाचरन् । तिष्ठति प्रकृताचारे स वा आर्य इति स्मृतः ॥ ४० ॥ महतां प्रार्थनेनैव विपत्तिरपि शोभते । दन्तभङ्गो हि नागानां श्लाघ्यो गिरिविदारणे ॥ ४१ ॥ संपत्सु महतां चित्तं भवत्युत्पलकोमलम् । आपत्सु च महाशैलशिलासङ्घातकर्कशम् ॥ ४२ ॥ क्षणक्षयिणि सापाये भोगे रज्यन्ति नोत्तमाः । संत्यज्याम्भो-

जकिञ्जल्कं न प्रार्थयति शैवलम् ॥४३॥ उत्तमः क्लेशविक्षोभं क्षमः सोढुं नहीतरः । मणिरेव महाशाणघर्षणं न तु मृत्कणः ॥४४॥ ये च संशान्तरजसः संशान्ततमसश्च ये । सत्त्वे स्थिता महात्मानो दुर्गाण्यतितरन्ति ते ॥४५॥ रक्तत्वं कमलानां सत्पुरुषाणां परोपकारित्वम् । असतां च निर्दयत्वं स्वभावसिद्धं त्रिषु त्रितयम् ॥ ४६ ॥ संपदि यस्य न हर्षो विपदि विषादो रणे च धीरत्वम् । तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम् ॥ ४७ ॥ अप्रियवचनदरिद्रैः प्रियवचनाढ्यैः स्वदारपरितुष्टैः । परपरिवादनिवृत्तैः क्वचित्क्वचिन्मण्डिता वसुधा ॥ ४८ ॥ वदनं प्रसादसदनं सदयं हृदयं सुधामुचो वाचः । करणं परोपकरणं येषां केषां न ते वन्द्याः ॥४९॥ सुजनो न याति वैरं परहितनिरतो विनाशकालेऽपि । छेदेऽपि चन्दनतरुः सुरभयति मुखं कुठारस्य ॥५०॥ मूकः परापवादे परदारनिरीक्षणेऽप्यन्धः । पङ्गुः परधनहरणे स जयति लोकत्रये पुरुषः ॥५१॥ किं मधुना किं विधुना किं सुधया किं च वसुधयाऽखिलया । यदि हृदयहारिचरितः पुरुषः पुनरेति नयनयोरयनम् ॥ ५२ ॥ शरदि न वर्षति गर्जति वर्षति वर्षासु निःस्वनो मेघः । नीचो वदति न कुरुते न वदति सुजनः करोत्येव ॥ ५३ ॥ छिन्नोऽपि रोहति तरुश्चन्द्रः क्षीणोऽपि वर्धते लोके । इति विमृशन्तः सन्तः संतप्यन्ते न ते विपदा ॥५४॥ इयमुन्नतसत्वशालिनां महतां कापि कठोर-

चित्तता । उपकृत्य भवन्ति दूरतः परतः प्रत्युपकारशङ्कया ॥५५॥ दानाय लक्ष्मीः सुकृताय विद्या चिन्ता परब्रह्मविनिश्चयाय । परोपकाराय वचांसि यस्य वन्द्यस्त्रिलोकीतिलकः स एव ॥ ५६ ॥ न वैरमुद्दीपयति प्रशान्तं न दर्पमारोहति नास्तमेति । न दुर्गतोऽस्मीति करोत्यकार्यं तमार्यशीलं परमाहुरार्याः ॥ ६७ ॥ न स्वे सुखे वै कुरुते प्रहर्षं नान्यस्य दुःखे भवति प्रहृष्टः । दत्त्वा न पश्चात्कुरुते हि तापं स कथ्यते सत्पुरुषार्यशीलः ॥५८॥ आदिमध्यनिधनेषु सौहृदं सज्जने भवति नेतरे जने । छेदतापननिघर्षताडनैर्नान्यभावमुपयाति काञ्चनम् ॥५९॥ तुङ्गात्मनां तुङ्गतराः समर्था मनोरथान्पूरयितुं न नीचाः । धाराधरा एव धराधराणां निदाघदाहं शमितुं न नद्यः ॥ ६० ॥ अज्ञातगोत्रा विदितात्मतत्वा लोकस्य दृष्ट्या जडवद्विभान्तः । चरन्ति भूतान्यनुकम्पमानाः सन्तो यदृच्छोपनतोपभोग्याः ॥ ६१ ॥ कुलं पवित्रं जननी कृतार्था विश्वम्भरा पुण्यवती च तेन । अपारसंवित्सुखसागरेऽस्मिँल्लीनं परे ब्रह्मणि यस्य चेतः ॥६२॥ विद्या विवादाय धनं मदाय शक्तिः परेषां परिपीडनाय । खलस्य साधोर्विपरीतमेतज्ज्ञानाय दानाय च रक्षणाय ॥ ६३ ॥ मद्रोः शृङ्गं सप्ततालप्रमाणं कल्याणाद्रिः सर्षपस्यैकदेशः । विन्दुःसिन्धुः सिन्धुरप्येकविन्दुरब्धौ लुब्धे साधुनीचोपकारे ॥६४॥ चातकस्त्रिचतुरान्पयः कणान्याचते जलधरं पिपासया । सोऽपि

पूरयति विश्वमम्भसा हन्त हन्त महतामुदारता ॥ ६५ ॥
अविरतं परकार्यकृतां सतां मधुरिमाऽतिशयेन वचोऽमृतम् ।
अपि च मानसमम्बुनिधिर्यशो विमलशारदपार्वणचन्द्रिका
॥ ६६ ॥ वनेऽपि सिंहा मृगमांसभक्षिणो बुभुक्षिता नैव तृणं
चरन्ति। एवं कुलीना व्यसनाभिभूता न नीचकर्माणि समा-
चरन्ति ॥५७॥ विपदि धैर्यमथाभ्युदये क्षमा सदसि वाक्-
पटुता युधि विक्रमः । यशसि चाभिरुचिर्व्यसनं श्रुतौ प्रकृति-
सिद्धमिदं हि महात्मनाम् ॥६८॥ शुद्धः स एव कुलजश्च स
एव धीरः श्लाघ्यो विपत्स्वपि न मुञ्चति यः स्वभावम् । तप्तं
यथा दिनकरस्य मरीचिजालैर्देहं त्यजेदपि हिमं न तु शीत-
लत्वम् ॥६९॥ कान्ताकटाक्षविशिखा न लुनन्ति यस्य चित्तं
न निर्दहति कोपकृशानुतापः । कर्षन्ति भूरिविषयाश्च न
लोभपाशैर्लोकत्रयं जयति कृत्स्नमिदं स धीरः ॥७०॥आक्रो-
शितोऽपि सुजनो न वदत्यवाच्यं निष्पीडितो मधुरमुद्वमती-
क्षुदण्डः । नीचो जनो मुखशतैरपि सेव्यमानो हास्येन तद्वदति
यत्कलहेऽप्यवाच्यम् ॥ ७१ ॥ दाता न दापयति दापयिता न
दत्ते यो दानदापनपरो मधुरं नवक्ति । दानञ्च दापनमथो मधुरा
च वाणी त्रीण्यप्यमूनि खलु सत्पुरुषे वसन्ति ॥७२॥ केनाञ्जि-
तानि नयनानि मृगाङ्गनानां को वा करोति रुचिराङ्गरुहान्म-
यूरान् । कश्चोत्पलेषु दलसंनिचयं करोति को वा करोति
विनयं कुलजेषु पुंसु ॥७३॥ नहि भवति वियोगः स्नेहविच्छे-

दहेतुर्जगति गुणनिधीनां सज्जनानां कदाचित् । घनतिमिर-
निबद्धो दूरसंस्थोऽपि चन्द्रः किम्नु कुमुदवनानां प्रेमभङ्गं
करोति ॥७४॥ मनसि वचसि काये पुण्यपीयूषपूर्णास्त्रिभुवन-
मुपकारश्रेणिभिः प्रीणयन्तः । परगुणपरमाणून्पर्वतीकृत्य
नित्यं निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥७५॥
घृष्टं घृष्टं पुनरपि पुनश्चन्दनं चारुगन्धं, छिन्नं छिन्नं पुनरपि
पुनः स्वादु चैवेक्षुकाण्डम् । दग्धं दग्धं पुनरपि पुनः काञ्चनं
कान्तवर्णं, न प्राणान्ते प्रकृतिविकृतिर्जायते चोत्तमानाम् ॥
७६॥ करे श्लाघ्यस्त्यागः शिरसि गुरुपादप्रणयिता, मुखे
सत्या वाणी विजयि भुजयोर्वीर्यमतुलम् । हृदि स्वच्छा वृत्तिः
श्रुतमधिगतैकव्रतफलं, विनाप्यैश्वर्येण प्रकृतिमहतां मण्डन-
मिदम् ॥७७॥ वाञ्छा सज्जनसङ्गमे परगुणे प्रीतिर्गुरौ नम्रता,
विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद्भयम् । भक्तिः
शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खलेष्वेते येषु वसन्ति
निर्मलगुणास्तेभ्यो नरेभ्यो नमः ॥ ७८ ॥ गर्वं नोद्वहते न
निन्दति परान्नो भाषते निष्ठुरं प्रोक्तं केनचिदप्रियञ्च सहते
क्रोधञ्च नालम्बते । श्रुत्वा वाक्यमलक्षणं परकृतं संतिष्ठते
मूकवद्दोषांश्छादयते स्वयं न कुरुते ह्येतत्सतां लक्षणम् ॥७९॥
नम्रत्वेनोन्नमन्तः परगुणकथनैः स्वान्गुणान् ख्यापयन्तः,
स्वार्थान्संपादयंतो विततबहुतरारम्भयत्नाः परार्थे । क्षान्त्येवा-
क्षेपरूक्षाक्षरमुखरमुखान्दुर्मुखान्दुःखयन्तः, सन्तः साश्चर्य-

चर्या जगति बहुमताः कस्य नाभ्यर्थनीयाः ॥८०॥

## दुर्जनपद्धतिः १९ ॥

दुर्जनं प्रथमं वन्दे सज्जनं तदनन्तरम् । मुखप्रक्षालनात्पूर्वं गुदप्रक्षालनं यथा ॥ १ ॥ दह्यमानाः सुतीव्रेण नीचाः परयशोऽग्निना । अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते ॥२॥ उपकारोऽपि नीचानामपकारो हि जायते । पयःपानं भुजङ्गानां केवलं विषवर्द्धनम् ॥ ३ ॥ दुर्जनः परिहर्तव्यो विद्ययाऽलंकृतोऽपि सन् । मणिना भूषितः सर्पः किमसौ न भयङ्करः ॥४॥ खलः सर्षपमात्राणि परछिद्राणि पश्यति । आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति ॥५॥ दुर्जनेन समं सख्यं प्रीतिश्चापि न कारयेत् । उष्णो दहति चाङ्गारः शीतः कृष्णायते करम् ॥६॥ दुर्जनः प्रियवादी च नैतद्विश्वासकारणम् । मधु तिष्ठति जिह्वाऽग्रे हृदि हालाहलं विषम् ॥ ७ ॥ वर्जनीयो मतिमता दुर्जनः सख्यवैरयोः । श्वा भवत्यपकाराय लिहन्नपि दशन्नपि ॥ ८ ॥ खलः सत्क्रियमाणोऽपि ददाति कलहं सताम् । दुग्धधौतोऽपि किं याति वायसः कलहंसताम् ॥९॥ दुर्जनस्य विशिष्टत्वं परोपद्रवकारणम् । व्याघ्रस्य चोपवासेन पारणं पशुमारणम् ॥ १० ॥ अशक्ताः शक्तिमात्मीयां श्लाघन्ते खलु दुर्जनाः । ते भवन्त्युपहासाय महतामेव सन्निधौ ॥ ११ ॥ अहो बत महत्कष्टं विपरीतमिदं जगत् । येनापत्रपते साधुरसाधुस्तेन तुष्यति ॥१२॥ मनस्यन्यद्वचस्य-

न्यत्कर्मण्यन्यद्दुरात्मनाम् । मनस्येकं वचस्येकं कर्मण्येकं सदात्मनाम् ॥ १३ ॥ खलः करोति दुर्वृत्तं नूनं फलति सज्जिषु । दशाननोऽहरत्सीतां बन्धनञ्च महोदधेः ॥ १४॥ न देवाय न धर्माय न बन्धुभ्यो न चार्थिने । दुर्जनस्यार्जितं वित्तं भुज्यते राजतस्करैः ॥१५॥ मुखं पद्मदलाकारं वाचा चन्दनशीतला । हृदयं क्रोधसंयुक्तं त्रिविधं धूर्तलक्षणम् ॥ १६ ॥ खलानां कण्टकानाञ्च द्विविधैव प्रतिक्रिया । उपानन्मुखभङ्गो वा दूरतो वाऽपि वर्जनम् ॥१७॥ दुर्जनः स्वस्वभावेन परकार्यं विनश्यति । नोदरतृप्तिमायाति मूषको वस्त्रभक्षकः ॥ १८ ॥ संत्यज्य शूर्पवद्दोषान् गुणान् गृह्णाति पण्डितः । दोषग्राही गुणत्यागी पल्लोलीव हि दुर्जनः ॥१९॥ यस्मिन्वंशे समुत्पन्नस्तमेव निजचेष्टितैः । दूषयत्यचिरेणैव घुणकीट इवाधमः ॥२०॥ तक्षकस्य विषं दन्ते मक्षिकाया विषं शिरः । वृश्चिकस्य विषं पुच्छे सर्वाङ्गे दुर्जनो विषम् ॥२१॥ शतं दद्यान्न विवदेदिति विज्ञस्य संमतम् । विना हेतुमपि द्वन्द्वमेतन्मूर्खस्य लक्षणम् ॥ २२ ॥ अभिवाद्य यथा वृद्धान्सन्तो गच्छन्ति निर्वृतिम् । एवं सज्जनमाक्रुश्य नीचो भवति निर्वृतः ॥२३॥ अन्यान्परिवदन्साधुर्यथा हि परितप्यते । तथा परिवदन्नन्यांस्तुष्टो भवति दुर्जनः ॥ २४ ॥ पापः कण्ठगतप्राणोऽप्यभिनन्दति पापिनम् । द्रौणिं प्रसुप्तबालघ्नं पांसुभुक्कुरुराडिव ॥ २५॥ स्तोकेनोन्नतिमायाति स्तोकेनायात्यधो गतिम् । अहो

सुसदृशी चेष्टा तुलायष्टेः खलस्य च ॥ २६ ॥ निष्णातोऽपि च वेदान्ते वैराग्यं नैति दुर्जनः । चिरं जलनिधौ मग्नः पाषाण इव मार्दवम् ॥ २७॥ येषां प्राणिवधः क्रीडा नर्ममर्मच्छिदो गिरः । कार्यं परोपतापित्वं ते मृत्योरपि मृत्यवः ॥ २८ ॥ यथा परोपकारेषु नित्यं जागर्ति सज्जनः । तथा परापकारेषु जागर्ति सततं खलः ॥ २९ ॥ प्रायः परोपतापाय दुर्जनः सततोद्यतः । अवश्यकरणीयत्वान्न कारणमपेक्षते ॥ ३० ॥ मृद्घटवत्सुखभेद्यो दुःसन्धानश्च दुर्जनो भवति । सुजनस्तु कनकघटवद्दुर्भेद्यश्चाशु सन्धेयः ॥३१॥ उपकारिणि विश्रब्धे शुद्धमतौ यः समाचरति पापम् । तं जनमसत्यसन्धं भगवति वसुधे कथं वहसि ॥ ३२ ॥ परिशुद्धामपि वृत्तिं समाश्रितो दुर्जनः परान्व्यथते । पवनाशिनोऽपि भुजगाः परोपतापं न मुञ्चन्ति ॥ ३३ ॥ पिशुनत्वमेव विद्या परदूषणमेव भूषणं येषाम् । परदुःखमेव सौख्यं शिव शिव ते केन वेधसा सृष्टाः ॥३४॥ मृगमीनसज्जनानां तृणजलसन्तोषविहितवृत्तीनाम् । लुब्धकधीवरपिशुना निष्कारणवैरिणो जगति ॥३५॥ अतिमलिने कर्त्तव्ये भवति खलानामतीव निपुणा धीः । तिमिरे हि कौशिकानां रूपं प्रतिपद्यते दृष्टिः ॥३६॥ शिरसि निहितोऽपि नित्यं यत्नादपि सेवितो बहुस्नेहैः । तरुणीकच इव नीचः कौटिल्यं नैव विजहाति ॥ ३७ ॥ दुर्जनदूषितमनसां सुजनेऽपि नास्ति विश्वासः । पाणौ पयसा दग्धे तक्रं फूत्कृत्य

बालकः पिबति ॥३८॥ गुणिनां गुणेषु सत्स्वपि पिशुनजनो दोषमात्रमादत्ते। पुष्पे फले विरागी क्रमेलकः कण्टकौघमिव ॥३९॥ रविरपि न दहति तादृग्यादृक्संदहति वालुका निकरः। अन्यस्माल्लब्धपदो नीचः प्रायेण दुःसहो भवति ॥ ४० ॥ त्यक्त्वाऽपि निजप्राणान् परहितविघ्नं खलः करोत्येव। कवले पतिता सद्यो वमयति खलु मक्षिकाऽन्नभोक्तारम् ॥४१॥ अतिरमणीये काव्ये पिशुनजनोऽन्वेषयति दूषणान्येव। अतिरमणीये वपुषि व्रणमेव मक्षिकानिकरः ॥ ४२ ॥ शोकं मा कुरु कुक्कुर सत्त्वेष्वहमधम इति वृथा साधो। कष्टादपि कष्टतरं दृष्ट्वा श्वानं कृतघ्ननामानम् ॥४३॥ कतिपयदिवसस्थायिनि मदकारिणि यौवने दुरात्मानः। विदधति तथाऽपराधं जन्मैव यथा वृथा भवति ॥ ४४ ॥ परितोषयिता न कश्चन स्वगतो यस्य गुणोऽस्ति देहिनः। परदोषकथाभिरल्पकः स्वजनं तोषयितुं किलेच्छति ॥४५॥ नलिकागतमपि कुटिलं न भवति सरलं शुनः पुच्छम्। तद्वत्खलजनहृदयं बोधितमपि नैव याति माधुर्यम् ॥ ४६ ॥ उपकारपरः स्वभावतः सततं सर्वजनस्य सज्जनः। असतामनिशं तथाप्यहो गुरुहृद्रोगकरी तदुन्नतिः ॥४७॥ विद्यया विमलयाऽप्यलंकृतो दुर्जनः सदसि माऽस्तुकश्चन। साक्षरा हि विपरीततां गताः केवलं जगति तेपि राक्षसाः ॥ ४८ ॥ अहमेव गुरुः सुदारुणानामिति हालाहल मा स्म तात दृप्यः। ननु सन्ति भवादृशानि भूयो भुवने-

ऽस्मिन्वचनानि दुर्जनानाम् ॥४९॥ अकरुणत्वमकारणविग्रहः परधने परयोषिति च स्पृहा । सुजनबन्धुजनेष्वसहिष्णुता प्रकृतिसिद्धमिदं हि दुरात्मनाम् ॥५०॥ विदुरेष्यदपायमात्मना परतः श्रद्दधतेऽथवा बुधाः । न परोपहितं न च स्वतः प्रमिमीतेऽनुभवादृतेऽल्पधीः ॥५१॥ न दुर्जनः सज्जनतामुपैति बहुप्रकारैरपि सेव्यमानः । भूयोऽपि सिक्तः पयसा घृतेन न निम्बवृक्षो मधुरत्वमेति ॥ ५२ ॥ न जारजातस्य ललाट-शृङ्गं कुलप्रसूतस्य न पाणिपद्मम् । यदा यदा मुञ्चति वाक्य-वाणं तदा तदा जातिकुलप्रमाणम् ॥ ५३ ॥ नैनं छन्दांसि वृजिनात्तारयन्ति मायाविनं मायया वर्तमानम् । नीडं शकुन्ता इव जातपक्षाश्छन्दांस्येनं प्रजहत्यन्तकाले ॥५४॥ निमित्त-मुद्दिश्य हि यः प्रकुप्यति ध्रुवं स तस्यापगमे प्रसीदति । अकारणद्वेषि मनस्तु यस्य वै कथं जनस्तं परितोषयिष्यति ॥५५॥ एकः खलोऽपि यदि नाम भवेत्सभायां मोघीकरोति विदुषां निखिलप्रयासम् । एकाऽपि पूर्णमुदरं मधुरैः पदार्थै-रालोड्य रेचयति हन्त न मक्षिका किम् ॥५६॥ संवर्धितोऽपि भुजगः पयसा न वश्यस्तत्पालकानपि निहन्ति बलेन सिंहः । दुष्टः परैरुपकृतस्तदनिष्टकारी विश्वासलेश इह नैव बुधैर्विधेयः ॥ ५७ ॥ प्राक् पादयोः पतति खादति पृष्ठमांसं कर्णे कलं किमपि रौति शनैर्विचित्रम् । छिद्रं निरूप्य सहसा प्रविशत्य-शङ्कः सर्वं खलस्य चरितं मशकः करोति ॥ ५८ ॥ ते वै

सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये सामान्यास्तु परोपकारनिरताः स्वार्थाविरोधेन ये । तेऽमी मानुषराक्षसाः परहितं स्वार्थाय विघ्नन्ति ये ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥५९॥ कस्त्वं भद्र खलेश्वरोऽहमिह किं घोरे वने स्थीयते शार्दूलादिभिरेव हिंस्रपशुभिः खाद्योऽहमित्याशया । कस्मात्कष्टमिदं त्वया व्यवसितं मद्देहमांसाशिनः प्रत्युत्पन्ननृमांसभक्षणधियस्ते घ्नन्तु सर्वान्नरान् ॥६०॥

## गुरुमहिमा २० ॥

अज्ञानतिमिरान्धानां ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ १ ॥ यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ २ ॥ यः पृष्ट्वा कुरुते कार्यं प्रष्टव्यान् स्वहितान् गुरून् । न तस्य जायते विघ्नः कस्मिंश्चिदपि कर्मणि ॥ ३॥ यावन्नानुग्रहः साक्षाज्जायते परमेश्वरात् । तावन्न सद्गुरुं कश्चित्सच्छास्त्रं वाऽपि नो लभेत् ॥ ४ ॥ उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता । ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम् ॥ ५ ॥ आचार्यस्त्वस्य यां जातिं विधिवद्वेदपारगः । उत्पादयति सावित्र्या सा सत्या साऽजराऽमरा ॥६॥ यावदायुस्त्रयो वन्द्या वेदान्तो गुरुरीश्वरः । आदौ ज्ञानप्रसिद्ध्यर्थं कृतघ्नत्वापनुत्तये ॥ ७ ॥ पिता ह्येनं जनयति पुरुषं पुरुषर्षभ । प्रज्ञां ददाति चाचार्यस्तस्मात्स गुरुरुच्यते ॥ ८ ॥ अज्ञो भवति वै बालः

पिता भवति मन्त्रदः । अज्ञं हि बालमित्याहुः पितेत्येव तु मन्त्रदम् ॥९॥ आचिनोति हि शास्त्रार्थमाचारे स्थापयत्यपि । स्वयमाचरते यस्मादाचार्यः परिकीर्त्यते ॥ १० ॥ अग्निहोत्री तपस्वी च वेदमध्यापयेच्च यः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥११॥ अहिंसयैव भूतानां कार्यं श्रेयोऽनुशासनम् । वाक्चैव मधुरा श्लक्ष्णा प्रयोज्या धर्ममिच्छता ॥१२॥ सत्यं गृणाति शिष्येभ्य इत्येवं यो निरुच्यते । हितोपदेशकश्चैव गुरुशब्दार्थ एव सः ॥१३॥ तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् । शब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम् ॥१४॥ गुरुभ्यस्त्वासनं देयमभिवाद्याभिपूज्य च । गुरुमभ्यर्च्य वर्धन्ते आयुषा यशसा श्रिया ॥ १५॥ य आवृणोत्यवितथं ब्राह्मणः श्रवणावुभौ । स माता स पिता ज्ञेयस्तं न द्रुह्येत्कदाचन ॥१६॥ कृतघ्नानां हि ये लोका ये लोका ब्रह्मघातिनाम् । मृत्वा तानभिसंयाति गुरुद्रोहपरो नरः ॥१७॥ विद्याऽभ्यासस्तपो ज्ञानमिन्द्रियाणां च संयमः । अहिंसा गुरुसेवा च निःश्रेयसकरं परम् ॥ १८ ॥ अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः । तमपीह गुरुं विद्याच्छ्रुतोपक्रियया तया ॥ १९ ॥ तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ २० ॥ कर्णाभ्यां शृणुयात्तद्वद्गुरुकीर्तिञ्च सर्वदा । दोषवक्तुर्यथाशक्ति कुर्यात्परिभवं सदा ॥२१॥यत्रात्मनो गुरोर्निन्दा क्रियते पापमोहितैः ।

तत्र कर्णौ पिधायैव स्थेयं शक्या गतिर्न चेत् ॥२२॥ परीवादात्खरो भवति श्वा वै भवति निन्दकः । परिभोक्ता कृमिर्भवति कीटो भवति मत्सरी ॥२३॥ योऽधीतविद्यः सकलः स सर्वेषां गुरुर्भवेत् । न च जात्याऽनधीतो हि गुरुर्भवितुमर्हति ॥२४॥ त्यजेद्धर्मं दयाहीनं विद्याहीनं गुरुं त्यजेत् । त्यजेत्क्रोधमुखीं भार्यां निःस्नेहान्बान्धवांस्त्यजेत् ॥ २५ ॥ गुरवो विरलाः सन्ति शिष्यसन्तापहारकाः । गुरवो बहवः सन्ति शिष्यवित्तापहारकाः ॥२६॥ परीक्ष्य लोकान्कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥ २७ ॥ तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय । येनाक्षरं पुरुषं वेदसत्यं प्रोवाच तां तत्वतो ब्रह्मविद्याम् ॥२८॥ विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि । असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्याम् ॥ २९ ॥ यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्य्योपपन्नम् । यस्ते न द्रुह्येत्कतमच्चनाह तस्मै मा ब्रूया निधिपाय ब्रह्मन् ॥ ३० ॥

## मित्रम् २१ ॥

मित्रवान्साधयत्यर्थान् दुःसाध्यानपि वै यतः । तस्मान्मित्राणि कुर्वीत समानान्येव चात्मनः ॥ १ ॥ आपन्नाशाय विबुधैः कर्तव्याः सुहृदोऽमलाः । न तरत्यापदं कश्चिद्योऽत्र

मित्रविवर्जितः ॥२॥ कराविव शरीरस्य नेत्रयोरिव पक्ष्मणी । अविचार्य प्रियं कुर्यात्तन्मित्रं मित्रमुच्यते ॥३॥ यस्य मित्रेण संभाषा यस्य मित्रेण संस्थितिः । मित्रेण सह यो भुंक्ते ततो नास्तीह पुण्यवान् ॥ ४ ॥ शुचित्वं त्यागिता शौर्यं सामान्यं सुखदुःखयोः । दाक्षिण्यञ्चानुरक्तिश्च सत्यता च सुहृद्गुणाः ॥५॥ स्वाभाविकन्तु यन्मित्रं भाग्येनैवाभिजायते । तदकृत्रिमसौहार्दमापत्स्वपि न मुञ्चति ॥ ६॥ न मातरि न दारेषु न सोदर्ये न चात्मनि । विश्वासस्तादृशः पुंसां यादृङ्मित्रे स्वभावजे ॥७॥ व्याधितस्यार्थहीनस्य देशान्तरगतस्य च । नरस्य शोकदग्धस्य सुहृद्दर्शनमौषधम् ॥८॥ किञ्चन्दनैः सकर्पूरैः तुहिनैः किञ्च शीतलैः । सर्वे ते मित्रगात्रस्य कलां नार्हन्ति षोडशीम् ॥ ९॥ शोकारातिभयत्राणं प्रीतिविश्रम्भभाजनम् । केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥ १० ॥ कृतज्ञं धार्मिकं सत्यमक्षुद्रं दृढभक्तिकम् । जितेन्द्रियं स्थितं स्थित्यां मित्रमत्यागि चेष्यते ॥ ११ ॥ औरसं कृतसंबन्धं तथा वंशक्रमागतम् । रक्षकं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधम् ॥१२॥ शीलं शौर्यमनालस्यं पाण्डित्यं मित्रसंग्रहः । अचोरहरणीयानि पञ्चैतान्यक्षयो निधिः ॥१३॥ धृतिः शमो दमः शौचं कारुण्यं वागनिष्ठुरा । मित्राणाञ्चानभिद्रोहः सप्तैताः समिधः श्रियः ॥१४॥ आकेशग्रहणान्मित्रमकार्यात्संनिवर्तयन् । अवाच्यः कस्यचिल्लोके कृतयत्नो यथाबलम् ॥

सशत्रुर्मित्रवानपि । सुप्रज्ञः प्रज्ञया हीनो दैवेन लभते सुखम् ॥ १९ ॥ दृश्यते हि कुले जातो दर्शनीयः प्रतापवान् । दुःखं जीवन्सहामात्यो भवितव्यं हि तत्तथा ॥ २० ॥ दौष्कुलेयस्तथा मूढो दुर्जातः शक्र दृश्यते । सुखं जीवन्सहामात्यो भवितव्यं हि तत्तथा ॥ २१ ॥ कल्याणी रूपसम्पन्ना दुर्भगा शक्र दृश्यते । अलक्षणा विरूपा च सुभगा दृश्यते परा ॥२२॥ यदेव कर्म केवलं पुरा कृतं शुभाशुभम् । तदेव पुत्र सार्थकं भवत्यमुत्र गच्छतः ॥ २३ ॥ सुखस्य दुःखस्य न कोऽपि दाता परो ददातीति कुबुद्धिरेषा । अहं करोमीति वृथाऽभिमानः स्वकर्मसूत्रग्रथितो हि लोकः ॥ २४ ॥ क्षते प्रहारा निपतन्त्यभीक्ष्णमन्नक्षये दीप्यति जाठराग्निः । आपत्सु वैराणि समुद्भवन्ति वामे विधौ सर्वमिदं नराणाम् ॥२५॥ न भूतपूर्वो न च केन दृष्टो हेम्नः कुरङ्गो न कदाऽपि वार्ता । तथापि तृष्णा रघुनन्दनस्य विनाशकाले विपरीतबुद्धिः ॥ २६॥ यन्मनोरथशतैरगोचरं न स्पृशन्ति कवयो गिराऽपि यत् । स्वप्नवृत्तिरपि यत्र दुर्लभा लीलयैव विदधाति तद्विधिः ॥२७॥ मा धाव मा धाव विनैव दैवं नो धावनं साधनमस्ति लक्ष्म्याः । चेद्धावनं साधनमस्ति लक्ष्म्याः श्वा धावमानोऽपि लभेत लक्ष्मीम् ॥२८॥ अन्यो धनं प्रेतगतस्य भुंक्ते वयांसि चाग्निश्च शरीरधातून् । द्वाभ्यामयं सह गच्छत्यमुत्र पुण्येन पापेन च वेष्टमानः ॥ २९॥ अरक्षितं तिष्ठति

दैवरक्षितं सुरक्षितं दैवहतं विनश्यति । जीवत्यनाथो विपि-
नेऽप्यरक्षितः कृतप्रयत्नोऽपि गृहे विनश्यति ॥३०॥ क्व च
ननु जनकाधिराजपुत्री क्व च दशकन्धरमन्दिरे निवासः ।
अयि खलु विषमः पुराकृतानां भवति हि जन्तुषु कर्मणां
विपाकः ॥३१॥ क्व नु कुलमकलङ्कमायताक्ष्याः क्व नु रज-
नीचरसङ्गमापवादः । अयि खलु विषमः पुराकृतानां भवति
हि जन्तुषु कर्मणां विपाकः ॥३२॥ सृजति तावदशेषगुणाकरं
पुरुषरत्नमलङ्करणं भुवः । तदपि तत्क्षणभाङ्गि करोति चेदहह
कष्टमपण्डितता विधेः ॥३३॥ भीमं वनं भवति तस्य पुरं
प्रधानं सर्वो जनः सुजनतामुपयाति तस्य । कृत्स्ना च
भूर्भवति सन्निधिरत्नपूर्णा यस्यास्ति पूर्वसुकृतं विपुलं नरस्य
॥३४॥ यच्चिन्तितं तदिह दूरतरं प्रयाति यच्चेतसाऽपि न
कृतं तदिहाभ्युपैति । प्रातर्भवामि वसुधाधिपचक्रवर्ती सोऽहं
व्रजामि विपिने जटिलस्तपस्वी ॥३५॥ स एवाहं पार्थस्त-
दपि वरलब्धं धनुरिदं त एवामी वाणाः प्रमथितसुराराति-
पृतनाः । इमास्ता वृष्णीनां हरिबलमुखानां युवतयो ह्रियन्ते
गोपालैर्विधिरतिबलीयान्न पुरुषः ॥ ३६ ॥ पौलस्त्यः कथ-
मन्यदारहरणे दोषं न विज्ञातवान् रामेणापि कथं न हेम-
हरिणस्यासम्भवो लक्षितः । अक्षैश्चापि युधिष्ठिरेण सहसा
प्राप्तो ह्यनर्थः कथं प्रत्यासन्नविपत्तिमूढमनसां प्रायो मतिः
क्षीयते ॥३७॥ यद्धात्रा निजभालपट्टलिखितं स्तोकं महद्वा

धनं तत्प्राप्नोति मरुस्थलेऽपि नितरां मेरौ ततो नाधिकम् । तद्धीरो भव वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलम् ॥ ३८ ॥ कुत्रायोध्या क्व रामो दशरथवचनाद्दण्डकारण्यमागात् क्वासौ मारीचनामा कनकमयमृगः कुत्र सीताऽपहारः । सुग्रीवे राममैत्री क्व जनकतनयाऽन्वेषणे प्रेषितोऽहं योऽर्थोऽसम्भावनीयस्तमपि घटयते क्रूरकर्मा विधाता ॥ ३९ ॥ पञ्चैते पाण्डुपुत्राः क्षितिपतितनया धर्मभीमार्जुनाद्याः शूराः सत्यप्रतिज्ञा दृढतरवपुषः केशवेनापि गूढाः । ते वीराः पाणिपात्रे कृपणजनगृहे भिक्षुचर्यां प्रवृत्ताः को वा कार्ये समर्थो भवति विधिवशाद्भाविनी कर्मरेखा ॥४०॥

## उद्यमाख्यानम् ३७ ॥

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतँ समाः । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ १ ॥ उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः । नहि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥२॥ निपानमिव मण्डूकाः सरःपूर्णमिवाण्डजाः । सोद्योगं नरमायान्ति विवशाः सर्वसम्पदः ॥ ३॥ यत्नवान्भव राजेन्द्र यत्नवान् सुखमेधते । अप्रधृष्यश्च शत्रुणां भृत्यानां स्वजनस्य च ॥ ४ ॥ वीरः सुधीः सुविद्यश्च पुरुषः पुरुषार्थवान् । तदन्ये पुरुषाकाराः पशवः पुच्छवर्जिताः ॥ ५ ॥ सिंहाः सत्पुरुषाश्चैव निजदर्पोपजीविनः ।

पराश्रयेण जीवन्ति कातराः शिशवः स्त्रियः ॥६॥ आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः । नास्त्युद्यमसमो बन्धुः कृत्वा यं नावसीदति ॥७॥ आरभन्तेऽल्पमेवाज्ञाः कार्यं व्यग्रा भवन्ति च । महारम्भाः कृतधियस्तिष्ठन्ति च निराकुलाः ॥ ८ ॥ अलसस्य कुतो विद्या ह्यविद्यस्य कुतो धनम् । अधनस्य कुतो मित्रममित्रस्य कुतः सुखम् ॥ ९ ॥ उच्छास्त्रितं शास्त्रितश्च पौरुषं द्विविधं स्मृतम् । उच्छास्त्रितमनर्थाय परमार्थाय शास्त्रितम् ॥ १० ॥ शुभेन पुरुषार्थेन शुभमासाद्यते फलम् । अशुभेनाशुभं राम यथेच्छसि तथा कुरु ॥११॥ अनेन मर्त्यदेहेन यल्लोकद्वयशर्मदम् । विचिन्त्य तदनुष्ठेयं कर्म हेयं तदन्यथा ॥१२॥ न कश्चिदपि जानाति किं कस्य श्वो भविष्यति । अतः श्वः करणीयानि कुर्यादद्यैव बुद्धिमान् ॥१३॥स्वभावाद्यत्नमातिष्ठेद्यत्नवान्नावसीदति । जरामरणरोगेभ्यः प्रियमात्मानमुद्धरेत् ॥१४॥ उद्धरेदात्मनाऽऽत्मानं नात्मानमवसादयेत् । आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥१५॥ आबाल्यादलमभ्यस्तैः शास्त्रसत्सङ्गमादिभिः । गुणैः पुरुषयत्नेन स्वार्थः सम्पद्यते हितः ॥१६॥ अनिर्वेदः श्रियो मूलं लाभस्य च शुभस्य च । महान्भवत्यनिर्विण्णः सुखश्चानन्त्यमश्नुते ॥ १७ ॥ शरीरनिरपेक्षस्य दक्षस्य व्यवसायिनः । बुद्धिप्रारब्धकार्यस्य नास्ति किञ्चन दुष्करम् ॥१८॥ विद्या वितर्को विज्ञानं स्मृतिस्तत्परता क्रिया ।

यस्यैते षड्गुणास्तस्य न साध्यमतिवर्तते।१९। शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासना सरित्। पौरुषेण प्रयत्नेन योजनीया शुभे पथि ॥२०॥ विषमं समतामेति दूरमायाति चान्तिकम्। सलिलं स्थलतामेति कार्यकाले महात्मनाम् ॥२१॥ नात्मानमवमन्येत पूर्वाभिरसमृद्धिभिः। आमृत्योः श्रियमन्विच्छेन्नैनां मन्येत दुर्लभाम् ॥२२॥ आरभेतैव कर्माणि श्रान्तः श्रान्तः पुनः पुनः। कर्माण्यारभमाणं हि पुरुषं श्रीर्निषेवते ॥ २३ ॥ अनागतविधातारमप्रमत्तमकोपनम्। स्थिरारम्भमदीनञ्च नरं श्रीरुपतिष्ठते ॥ २४ ॥ यत्रोत्साहसमारम्भो यत्रालस्यविहीनता। नयविक्रमसंयोगस्तत्र श्रीरचला ध्रुवम् ॥ २५ ॥ विपत्तिष्वव्यथो दक्षो नित्यमुत्थानवान्नरः। अप्रमत्तो विनीतात्मा नित्यं भद्राणि पश्यति ॥२६॥ न त्वेवात्माऽवमन्तव्यः पुरुषेण कदाचन। नह्यात्मपरिभूतस्य भूतिर्भवति शोभना ॥२७॥ अलक्ष्मीराविशत्येनं शयानमलसं नरम्। निःसंशयं फलं लब्ध्वा दक्षो भूतिमुपाश्नुते ॥२८॥ दुःखार्तेषु प्रमत्तेषु नास्तिकेष्वलसेषु च। न श्रीर्वसत्यदान्तेषु ये चोत्साहविवर्जिताः ।२९। पाण्डवानां हृतं राज्यं धार्तराष्ट्रैर्महाबलैः। पुनः प्रत्याहृतञ्चैव न दैवाद् भुजसंश्रयात् ॥३०॥ उत्साहो बलवानार्य नास्त्युत्साहात्परं बलम्। सोत्साहस्य लोकेषु न किञ्चिदपि दुर्लभम् ॥ ३१ ॥ उत्साहवन्तः पुरुषा नावसीदन्ति कर्मसु। उत्साहमात्रमाश्रित्य प्रतिलप्स्याम जानकीम्

॥३२॥ न तदस्ति जगत्यस्मिन् स्वप्नसंकल्पदुर्लभम् । यन्न सिध्यति यत्नेन धीराणां व्यवसायिनाम् ॥ ३३ ॥ अज्ञोऽपि तज्ज्ञतामेति शनैः शैलोपि चूर्ण्यते । घुणोऽप्यत्ति महावृक्षं पश्याभ्यासविजृम्भितम् ॥३४॥ निरुत्साहस्य दीनस्य शोकपर्याकुलात्मनः । सर्वार्था व्यवसीदन्ति व्यसनञ्चाधिगच्छति ॥ ३५ ॥ पशवः पक्षिणो जीवा ये जीवा जलचारिणः । आलस्यं हि परित्यज्य दृष्टा उद्योगशालिनः ॥३६॥ यद्यत्परवशं कर्म तत्तद्यत्नेन वर्जयेत् । यद्यदात्मवशं तु स्यात्तत्तत्सेवेत यत्नतः ॥३७॥ सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् । एतद्विद्यात्समासेन लक्षणं सुखदुःखयोः॥३८॥काकतालीयवत्प्राप्तं दृष्ट्वापि निधिमग्रतः । न स्वयं दैवमादत्ते पुरुषार्थमपेक्षते ॥ ॥ ३९ ॥ उद्योगः खलु कर्तव्यः फलं मार्जारवद्भवेत् । जन्मप्रभृति गौर्नास्ति पयः पिबति नित्यशः ॥ ४० ॥ यो यमर्थं प्रार्थयते यदर्थं घटतेऽपि च । अवश्यं तदवाप्नोति न चेच्छान्तो निवर्तते ॥ ४१ ॥ यस्य यस्य हि यो भावस्तेन तेन हि तं नरम् । अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् ॥ ४२ ॥ उद्यमः साहसं धैर्यं बुद्धिः शक्तिः पराक्रमः । षडेते यत्र वर्तन्ते तत्र देवः सहायकृत् ॥ ४३ ॥ कामपि श्रियमासाद्य यस्तद्वृद्धौ न चेष्टते । तस्यायतिषु न श्रेयो बीजभोजिकुटुम्बवत् ॥ ४४ ॥ अलब्धञ्चैव लिप्सेत लब्धं रक्षेदवेक्षया । रक्षितं वर्धयेत्सम्यग्वृद्धं पात्रेषु निक्षिपेत्

॥ ४५ ॥ न संशयमनारुह्य नरो भद्राणि पश्यति । संशयं पुनरारुह्य यदि जीवति पश्यति ॥ ४६ ॥ दोषभीतेरनारम्भस्तत्कापुरुषलक्षणम् । कैरजीर्णभयाद्भ्रात र्भोजनं परिहीयते ॥ ४७ ॥ नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः । शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः ॥ ४८ ॥ साधूपादिष्टमार्गेण यन्मनोऽङ्गविचेष्टितम् । तत्पौरुषं तत्सफलमन्यदुन्मत्तचेष्टितम् ॥ ४९ ॥ यो न संचरते देशान्यो न सेवेत पण्डितान् । तस्य संकुचिता बुद्धिर्घृतविन्दुरिवाम्भसि ॥५०॥ यस्तु संचरते देशान्यस्तु सेवेत पण्डितान् । तस्य विस्तारिता बुद्धिस्तैलबिन्दुरिवाम्भसि ॥ ५१ ॥ व्यापारान्तरमुत्सृज्य वीक्षमाणो वधूमुखम् । यो गृहेष्वेव निद्राति दरिद्राति स दुर्मतिः ॥ ५२ ॥ ये समुद्योगमुत्सृज्य स्थिता दैवपरायणाः । ते धर्ममर्थं कामञ्च नाशयन्त्यात्मविद्विषः ॥ ५३ ॥ विश्वामित्रेण मुनिना दैवमुत्सृज्य दूरतः । पौरुषेणैव संप्राप्तं ब्राह्मण्यं राम नान्यथा ॥ ५४ ॥ सूतो वा सूतपुत्रो वा यो वा को वा भवाम्यहम् । दैवायत्तं कुले जन्म ममायत्तं हि पौरुषम् ॥ ५५ ॥ पश्य कर्मवशात्प्राप्तं भोज्यकालेऽपि भोजनम् । हस्तोद्यमं विना वक्त्रे प्रविशेन्न कथञ्चन ॥ ५६ ॥ यो हि दिष्टमुपासीनो निर्विचेष्टः सुखं शयेत् । अवसीदेत्स दुर्बुद्धिरामो घट इवोदके ॥ ५७ ॥ न दैवमिति संचित्य त्यजेदुद्योगमात्मनः । अनुद्यमेन कस्तैलन्तिलेभ्यः प्राप्तुमर्हति ॥५८॥ विहाय पौरुषं

यो हि दैवमेवावलम्बते । प्रासादसिंहवत्तस्य मूर्ध्नि तिष्ठन्ति वायसाः ॥ ५९ ॥ पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते । तस्मात्पुरुषकारेण विना दैवं न सिध्यति ॥ ६० ॥ प्राक्कर्मवशतः सर्वं भवत्येवेति निश्चितम् । तदोपदेशाव्यर्थाः स्युः कार्याकार्यप्रबोधकाः ॥ ६१ ॥ धीमन्तो वन्द्यचरिता मन्यन्ते पौरुषं महत् । अशक्ता पौरुषं कर्तुं क्लीबा दैवमुपासते ॥६२॥ भोक्ता तृप्यति नाभोक्ता गन्ता गच्छति नागतिः । वक्ता वक्ति न चावक्ता पौरुषं सफलं नृणाम् ॥ ६३ ॥ दैवमेवेह चेत्कर्तृ पुंसः किमिव चेष्टया । स्नानदानासनोच्चारान्दैवमेव करिष्यति ॥ ६४ ॥ कालविद्भिर्विनिर्णीता यस्यास्ति चिरजीविता । स चेज्जीवति संछिन्नशिरास्तद्दैवमुत्तमम् ॥ ६५ ॥ आलस्यं स्त्रीसेवा सरोगता जन्मभूमिवात्सल्यम् । सन्तोषो भीरुत्वं षड्व्याघाता महत्त्वस्य ॥ ६६ ॥ अव्यवसायिनमलसं दैवपरं साहसाच्च परिहीनम् । प्रमदा पतिमिव वृद्धं नेच्छति लक्ष्मीरुपस्थातुं ॥ ६७ ॥ विद्यां वित्तं शिल्पं तावन्नाप्नोति मानवः सम्यक् । यावद्व्रजति न भूमौ देशाद्देशान्तरं हृष्टः ॥६८॥ देशान्तरेषु बहुविधभाषावेषादि येन न ज्ञातम् । भ्रमता धरणीपीठे तस्य फलं जन्मनो व्यर्थम् ॥ ६९ ॥ गन्तव्या राजसभा द्रष्टव्या राजवल्लभाः पुरुषाः । यद्यपि न भवत्यर्थो भवत्यनर्थप्रतीकारः ॥ ७० ॥ यस्यास्ति सर्वत्र गतिः स कस्मात्स्वदेशरागेण हि याति नाशम् । तातस्य कूपोऽयमिति

ब्रुवाणाः क्षारं जलं कापुरुषाः पिबन्ति ॥७१॥ त्याज्यं न धैर्यं विधुरेऽपि काले धैर्यात्कदाचिद्गतिमाप्नुयात्सः । यथा समुद्रेऽपि च पोतभङ्गे सांयात्रिको वाञ्छति तर्तुमेव ॥७२॥ सुखञ्च दुःखञ्च भवाभवौ च लाभालाभौ मरणं जीवितञ्च । पर्यायशः सर्वमेते स्पृशन्ति तस्माद्धीरो न च हृष्येन्न शोचेत् ॥ ७३ ॥ प्राप्यापदं न व्यथते कदाचिदुद्योगमन्विच्छति चाप्रमत्तः । दुःखञ्च काले सहते महात्मा धुरन्धरस्तस्य विपद्विनश्येत् ॥७४॥ पूर्वजन्मजनितं पुराविदः कर्म दैवमिति संप्रचक्षते । उद्यमेन तदुपार्जितं चिराद्दैवमुद्यमवशं न तत्कथम् ॥७५॥ उत्साहसम्पन्नमदीर्घसूत्रं क्रियाविधिज्ञं व्यसनेष्वसक्तम् । शूरं कृतज्ञं दृढसौहृदञ्च लक्ष्मीः स्वयं याति निवासहेतोः ॥७६॥ कुचैलिनं दन्तमलावधारिणं बह्वाशिनं नित्यकठोरभाषिणम् । सूर्योदये चास्तमये च शायिनं विमुञ्चति श्रीरपि चक्रपाणिनम् ॥७७॥ अर्थः सुखं कीर्तिरपीह माभूदनर्थ एवास्तु तथापि धीराः । निजप्रतिज्ञामधिरुह्यमाना महोद्यमाः कर्म समारभन्ते ॥७८॥ आरभ्यते न खलु विघ्नभयेन नीचैः प्रारभ्य विघ्नविहता विरमन्ति मध्याः । विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः प्रारभ्य चोत्तमजना न परित्यजन्ति ॥ ७९ ॥ उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीर्दैवं प्रधानमिति कापुरुषा वदन्ति । दैवं विहाय कुरु पौरुषमात्मशक्त्या यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥८०॥

## अन्योक्तयः ३८ ॥

अस्ति यद्यपि सर्वत्र नीरं नीरजमण्डितम् । रमते न मरालस्य मानसं मानसं विना ॥ १ ॥ एकेन राजहंसेन या शोभा सरसो भवेत् । न सा वकसहस्रेण परितस्तीरवासिना ॥२॥ हंसः श्वेतो वकः श्वेतः को भेदो वकहंसयोः । नीरक्षीरविवेके तु हंसो हंसो वको वकः ॥३॥ अम्भोजिनीवननिवासविलासमेव हंसस्य हन्ति नितरां कुपितो विधाता । न त्वस्य दुग्धजलभेदविधौ प्रसिद्धां वैदग्ध्यकीर्तिमपहर्तुमसौ समर्थः ॥४॥ यत्रापि कुत्रापि गता भवन्ति हंसा महीमण्डलमण्डनाय । हानिस्तु तेषां हि सरोवराणां येषां मरालैः सह विप्रयोगः ॥ ५ ॥ सुभाषितस्याध्ययनानुसक्तं शुकं वराकाः प्रहसन्ति काकाः । तमेव संसत्सु गिरं किरन्तं दृष्ट्वा भवन्ति त्रपया नतास्याः ॥६॥ भद्रं भद्रं कृतं मौनं कोकिलैर्जलदागमे । वक्तारो दर्दुरा यत्र तत्र मौनं हि शोभते ॥७॥ कलकण्ठ यथा शोभा सहकारे भवद्गिरः । खदिरे वा पलाशे वा किन्तथा स्याद्विचारय ॥८॥ सहकारे चिरं स्थित्वा सलीलं बालकोकिल । तं हित्वाऽद्यान्यवृक्षेषु विचरन्न विलज्जसे ॥९॥ काकः कृष्णः पिकः कृष्णः को भेदः पिककाकयोः । वसन्तसमये प्राप्ते काकः काकः पिकः पिकः ॥१०॥ कोकिलोऽहं भवान्काकः समानः कालिमाऽऽवयोः । अन्तरं कथयिष्यन्ति काकलीकोविदा जनाः ॥ ११ ॥ तवैतद्वाचि

माधुर्यज्ञाने कोकिल कृत्रिमम् । प्रपोषितो यैस्तानेव जातपक्षो जहासि यत् ॥ १२॥ मलिनैश्चेन्न सङ्गस्ते नीचैः काककुलैः पिक । श्रुतिदूषकनिर्ह्रादैः श्लाघनीयस्तदा भवेः ॥१३॥ रे रे कोकिल मा भज मौनं किञ्चिदुदञ्चय पञ्चमरागम् । नो चेत्त्वामिह को जानीते काककदम्बकपिहिते चूते ॥ १४ ॥ अस्यां सखे बधिरलोकनिवासभूमौ किं कूजितेन खलु कोकिल कोमलेन । एते हि दैवहतकास्तदभिन्नवर्णन्त्वां काकमेव कलयन्ति कलानभिज्ञाः ॥ १५ ॥ अवश्यकारणैः प्राणान्धारयत्येव चातकः । प्रार्थनाभङ्गभीतो हि शक्रादपि न याचते ॥१६॥ रे रे चातक सावधानमनसा मित्र क्षणं श्रूयतामम्भोदा बहवो वसन्ति गगने सर्वेऽपि नैतादृशाः । केचिद्वृष्टिभिरार्द्रयन्ति धरणीं गर्जन्ति केचिद्वृथा यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः ॥१७॥ आमरणादपि विरुतं कुर्वाणाः स्पर्धया सह मयूरैः । किं जानन्ति वराकाः काकाः केकारवं कर्तुम् ॥ १८ ॥ काकस्य गात्रं यदि काञ्चनस्य माणिक्यरत्नं यदि चञ्चुदेशे । एकैकपक्षे ग्रथितं मणीनां तथापि काको न तु राजहंसः ॥१९॥ अनुसरति करिकपोलं भ्रमरः श्रवणेन ताड्यमानोऽपि । गणयति न तिरस्कारं दानान्धविलोचनो नीचः ॥२०॥ अलिरयं नलिनीदलमध्यगः कमलिनीमकरन्दमदालसः । विधिवशात्परदेशमुपागतः कुटजपुष्परसं बहु मन्यते ॥ २१ ॥ रात्रिर्गमिष्यति भविष्यति

सुप्रभातं भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः । इत्थं वि-
चिन्तयति कोशगते द्विरेफे हा मूलतः कमलिनीं गज उज्ज-
हार ॥ २२ ॥ दानार्थिनो मधुकरा यदि कर्णतालैर्दूरीकृताः
करिवरेण मदान्धबुद्ध्या । तस्यैव गण्डयुगमण्डनहानिरेषा
भृङ्गाः पुनर्विकचपद्मवने चरन्ति ॥२३॥ एकोऽहमसहायोऽहं
कृशोऽहमपरिच्छदः । स्वप्नेऽप्येवंविधा चिन्ता मृगेन्द्रस्य न
जायते ॥२४॥ नाभिषेको न संस्कारः सिंहस्य क्रियते वने ।
विक्रमार्जितसत्वस्य स्वयमेव मृगेन्द्रता ॥ २५ ॥ जीर्णोऽपि
क्रमहीनोऽपि कृशोऽपि यदि केसरी । तथापि यूथनाथस्य
शङ्कातङ्काय कल्पते ॥ २६ ॥ बन्धनस्थो हि मातङ्गः सहस्र-
भरणक्षमः । अपि स्वच्छन्दचारी श्वा स्वोदरेणापि दुःखितः
॥ २७ ॥ मलोत्सर्गं गजेन्द्रस्य मूर्ध्नि काकः करोति चेत् ।
कुलानुरूपं तत्तस्य यो गजो गज एव सः ॥२८॥ लांगूलचा-
लनमधश्चरणावपातं भूमौ निपत्य वदनोदरदर्शनञ्च । श्वा
पिण्डदस्य कुरुते गजपुङ्गवस्तु धीरो विलोकयति चाटुशतैश्च
भुङ्क्ते ॥२९॥ यद्यपि का नो हानिः परकीयां चरति रासभो
द्राक्षाम् । असमञ्जसमिति मत्वा तथापि संखिद्यते चेतः ॥
३०॥छायामन्यस्य कुर्वन्ति तिष्ठन्ति स्वयमातपे । फलान्यपि
परार्थाय वृक्षाः सत्पुरुषा इव ॥ ३१॥ पत्रपुष्पफलच्छाया-
मूलवल्कलदारुभिः । धन्या महीरुहा येभ्यो निराशा यान्ति
नार्थिनः ॥३२॥ सेवितव्यो महावृक्षः फलच्छायासमन्वितः ।

यदि दैवात्फलं नास्ति छाया केन निवार्यते ॥३३॥ रोलम्बैर्न विलम्बितं विघटितं धूमाकुलैः कोकिलैः मायूरैश्चलितं पुरैव रभसात्कीरैरधीरैर्गतम् । एकेनापि सुपल्लवेन तरुणा दावांनलोपप्लवः सोढः को न विपत्सु मुञ्चति जनो मूर्ध्नाऽपि यो लालितः ॥ ३४ ॥ नीरसान्यपि रोचन्ते कार्पासस्य फलानि मे । येषां गुणमयं जन्म परेषां गुह्यगुप्तये ॥ ३५ ॥ रत्नैरापूरितस्यापि मदलेशोऽस्ति नाम्बुधेः । मुक्ताः कतिपयाः प्राप्य मातङ्गा मदविह्वलाः ॥ ३६ ॥ अयं रत्नाकरोऽम्भोधिरित्यसेवि धनाशया । धनं दूरेऽस्तु वदनमपूरि क्षारवारिभिः ॥ ३७ ॥ अधः करोषि यद्रत्नं मूर्ध्ना धारयसे तृणम् । दोषस्तवैव जलधे रत्नं रत्नं तृणन्तृणम् ॥ ३८ ॥ वातोल्लासितकल्लोल धिक्ते सागर गर्जनम् । यस्य तीरे तृषाक्रान्तः पान्थः पृच्छति वापिकाम् ॥ ३९ ॥ अगाधेनापि किन्तेन तोयेन लवणाम्बुधेः । जानुमात्रं वरं वारि तृष्णाच्छेदकरं नृणाम् ॥ ४० ॥ किं खलु रत्नैरेतैः किं पुनरभ्रायितेन वपुषा ते । सलिलमपि यन्न तावकमर्णव वदनं प्रयाति तृषितानाम् ॥४१॥ तृषां धरायाः शमयत्यशेषां यः सोऽम्बुदो गर्जति गर्जतूच्चैः । यस्त्वेष कस्यापि न हन्ति तृष्णां स किं वृथा गर्जति निस्त्रपोऽब्धिः ॥ ४२ ॥ कतिपयदिवसस्थायी पूरो दूरोन्नतोऽपि भविता ते । तटिनि तटद्रुमपातनपातकमेकं चिरस्थायि ॥ ४३ ॥ यास्यति जलधरसमयस्तव च समृद्धिर्लघीयसी

भाविता । तटिनि तटद्रुमपातनपातकमेकं चिरस्थायि ॥४४॥ छायां प्रकुर्वन्ति नमन्ति पुष्पैः फलानि यच्छन्ति तटद्रुमा ये । उन्मूल्य तानेव नदी प्रयाति तरङ्गिणां क्व प्रतिपन्नमस्ति ॥ ४५ ॥ चातकः स्वानुमानेन जलं प्रार्थयतेऽम्बुदात् । स स्वौदार्यतया सर्वां प्लावयत्यम्बुना महीम् ॥ ४६ ॥ आश्रयः क्रियतामेष तरुः सन्मार्गमाश्रितः । पाथोद सिच्यतां काले नोपेक्ष्यो दूरभावतः ॥ ४७ ॥ एकस्य तस्य मन्ये धन्यामभ्युन्नतिं जलधरस्य । विश्वं सशैलकाननमाननमवलोकते यस्य ॥ ४८ ॥ मुञ्च मुञ्च सलिलं दयानिधे नास्ति नास्ति समयो विलम्बने । अद्य चातककुले मृते पुनर्वारि वारिधर किं करिष्यसि ॥ ४९ ॥ गर्जसि मेघ न यच्छसि तोयं चातकपक्षी व्याकुलितोऽहम् । दैवादिह यदि दक्षिणवातः क्व त्वं क्वाहं क्व च जलपातः ॥५०॥ वातैर्विधूनय विभीषय भीमनादैः संचूर्णय त्वमथवा करकाभिघातैः । त्वद्वारिबिन्दुपरिपालितजीवितस्य नान्या गतिर्भवति वारिद चातकस्य ॥५१॥ आश्वास्य पर्वतकुलं तपनोपतप्तं दुर्दाववह्निविधुराणि च काननानि । नानानदीनदशतानि च पूरयित्वा रिक्तोऽसि यज्जलद सैव तवोत्तमश्रीः ॥ ५२ ॥ नैवालवालवलयं भरितं द्रुमाणां नार्द्रीकृतापि बत चातकपोतचञ्चुः । दावानलाकुलतरुः शमितो न शीघ्रं भाराय वारिधर वारिपदं तवाभूत् ॥ ५३ ॥ हे कूप त्वं चिरञ्जीव स्वल्पतोये बहुव्ययः । गुण-

वद्रिक्तपात्राणि प्राप्नुवन्ति हि पूर्णताम् ॥ ५४ ॥ इयत्यां सम्पत्तावपि च सलिलानां त्वमधुना न तृष्णामार्तानां हरसि यदि कासार सहसा । निदाघे चण्डांशौ किरति परितोऽङ्गारनिकरं कृशीभूतः केषामहह परिहर्ताऽसि खलु ताम् ॥५५॥ स्फटिकस्य गुणो योऽसौ स एवायाति दोषताम् । धत्ते स्वच्छतया छायां यतो मलवतामपि ॥५६॥ अज्ञतया प्रेम्णा वा चूडामणिमाकलय्य काचमणिम् । नृपतिर्वहेत शिरसा तेनासौ न ह्यनर्घ्यमणिः ॥५७॥ अग्निदाहे न मे दुःखं छेदेन निकषेण वा । यत्तदेव महद्दुःखं गुञ्जया सह तोलनम् ॥ ५८ ॥ हे हेमकार परदुःखविचारमूढ किं मां मुहुः क्षिपसि वारशतानि वह्नौ । सन्दीप्यते मयि सुवर्णगुणातिरेको लाभः परं तव मुखे खलु भस्मपातः ॥५९॥ कनकभूषणसंग्रहणोचितो यदि मणिस्त्रपुणि प्रणिधीयते । न स विरौति न चापि स शोभते भवति योजयितुर्वचनीयता ॥ ६० ॥

## स्वर्गनरकगतिवर्णनम् ३९ ॥

परुषाः पिशुनाश्चैव मानिनोऽनृतवादिनः । अनिबद्धप्रलापाश्च नरा निरयगामिनः ॥१॥ ये परस्वापहर्तारस्तद्गुणानामसूयकाः । पराश्रियाऽभितप्यन्ते ते वै निरयगामिनः ॥२॥ कूपानाञ्च तडागानां प्रपानाञ्च परन्तप । रथ्यानाञ्चैव भेत्तारस्ते वै निरयगामिनः ॥३॥ विसृज्यादन्ति ये दारान् शिशून् भृत्यातिथींस्तथा । उत्सन्नपितृदेवेज्यास्ते वै निरयगामिनः

॥४॥ यतीनां दूषका राजन् सतीनां दूषकास्तथा । वेदानां दूषकाश्चैव ते वै निरयगामिनः ॥५॥ आद्यं पुरुषमीशानं सर्वलोकमहेश्वरम् । न चिन्तयन्ति ये विष्णुं ते वै निरयगामिनः ॥६॥ काष्ठैर्वा शङ्कुभिर्वापि कण्टकैरुपलैस्तथा । पन्थानं येऽवरुन्धन्ति ते वै निरयगामिनः ॥ ७ ॥ क्षेत्रवृत्तिगृहच्छेदं प्रीतिच्छेदश्च ये नराः । आशाछेदं प्रकुर्वन्ति ते वै निरयगामिनः ॥८॥ आशया समनुप्राप्तान् क्षुत्तृषाश्रमकर्षितान् । येऽतिथीनवमन्यन्ते ते वै निरयगामिनः ॥९॥ मद्यमांसरताश्चैव गीतवाद्यरताश्च ये । द्यूतसङ्गरताश्चैव ते वै निरयगामिनः॥१०॥ अनाथं कृपणं दीनं रोगार्त्तं वृद्धमेव च । नानुकम्पन्ति ये मूढास्ते वै निरयगामिनः ॥११॥ ये शरीरमलान्यग्नौ प्रक्षिपन्ति जले तथा । उद्यानेष्वपि गोष्ठे वा ते वै निरयगामिनः ॥ १२ ॥ विशीला भिन्नमर्यादा नित्यं संकीर्णमैथुनाः । अल्पायुषो भवन्तीह नरा निरयगामिनः ॥ १३ ॥ सत्येन तपसा क्षान्त्या दानेनाध्ययनेन च । ये धर्ममनुवर्तन्ते ते नराः स्वर्गगामिनः ॥१४॥ ये च होमजपस्नानदेवतार्चनतत्पराः । श्रद्दधाना महात्मानस्ते नराः स्वर्गगामिनः ॥ १५ ॥ सहस्रपरिवेष्टारस्तथैव च सहस्रदाः । त्रातारश्च सहस्राणां ते नराः स्वर्गगामिनः ॥ १६ ॥ आढ्याश्च रूपवन्तश्च यौवनस्थाश्च भारत । ये वै जितेन्द्रिया धीरास्ते नराः स्वर्गगामिनः ॥१७॥ सुवर्णस्य च दातारो गवां भूमेश्च भारत । अन्नानां वाससां

चैव ते नराः स्वर्गगामिनः ॥ १८ ॥ निवेशनानां धान्यानां रसानाञ्च परन्तप । स्वयमुत्पाद्य दातारस्ते नराः स्वर्गगा-मिनः ॥ १९ ॥ द्विषतामपि ये दोषान्न वदन्ति कदाचन । कीर्तयन्ति गुणानेव ते नराः स्वर्गगामिनः ॥ २० ॥ प्रवृत्तिश्च निवृत्तिश्च वेदशास्त्रोक्तवर्त्मना । आचरन्तो महात्मानस्ते नराः स्वर्गगामिनः ॥२१॥ येऽनभ्यासबलाद्वक्तुं न जानन्ति वचोऽप्रियम् । प्रियवाक्यैकविज्ञानास्ते नराः स्वर्गगामिनः ॥२२॥ वापीकूपतडागानां प्रपानां देववेश्मनाम् । आश्रमाणाञ्च कर्तारस्ते नराः स्वर्गगामिनः ॥२३॥ अवन्ध्यं दिवसं कर्तुं धर्मेणैकेन सर्वथा । प्रीतिं गृह्णन्ति ये नित्यं ते नराः स्वर्गगामिनः ॥ २४ ॥ आक्रोशन्तं स्तुवन्तञ्च तुल्यं पश्यन्ति ये नराः । शान्तात्मानो जितात्मानस्ते नराः स्वर्गगामिनः ॥ २५ ॥ मनसश्चेन्द्रियाणाञ्च नित्यं संयमने रताः । त्यक्तशोकभयक्रोधास्ते नराः स्वर्गगामिनः ॥२६॥ कर्मणा मनसा वाचा नोपतापयते परम् । सर्वथा शुद्धभावो यः स याति त्रिदिवं नरः ॥२७॥ परस्वे निर्ममा नित्यं परदारविवर्जकाः । धर्मलब्धार्थभोक्तारस्ते नराः स्वर्गगामिनः ॥२८॥ आत्महेतोः परार्थे वा नर्महास्याश्रयात्तथा । ये मृषा न वदन्तीह ते नराः स्वर्गगामिनः ॥ २९ ॥ पिशुनां ये न भाषन्ते मित्रभेदकरीं गिरम् । ऋतं मैत्रन्तु भाषन्ते ते नराः स्वर्गगामिनः ॥३०॥ ये वर्जयन्ति परुषं परद्रोहञ्च मानवाः । सर्वभूतसमा दान्तस्ते

नराः स्वर्गगामिनः ॥ ३१ ॥ असत्प्रलापाद्विरता विरुद्धपरि-
वर्जकाः । सौम्यप्रलापिनो ये च ते नराः स्वर्गगामिनः॥३२॥
श्रुतवन्तो दयावन्तः शुचयः सत्यसङ्गराः । स्वैरर्थैः परिसन्तु-
ष्टास्ते नराः स्वर्गगामिनः ॥ ३३ ॥ श्रद्धावन्तो दयावन्तश्चो-
क्षाश्चोक्षजनप्रियाः । धर्माधर्मविदो नित्यं ते नराः स्वर्गगा-
मिनः ॥३४॥ न कोपाद्व्याहरन्ते ये वाचं हृदयदारिणीम् ।
शान्तं वदन्ति क्रुद्धाऽपि ते नराः स्वर्गगामिनः ॥ ३५ ॥
सर्वहिंसानिवृत्ता ये नराः सर्वसहाश्च ये । सर्वस्याश्रयभूताश्च
ते नराः स्वर्गगामिनः ॥ ३६ ॥ मातृवत् स्वसृवच्चैव नित्यं
दुहितृवच्च ये । परदारेषु वर्तन्ते ते नराः स्वर्गगामिनः॥३७॥
शुश्रूषाभिस्तपोभिश्च श्रुतमादाय भारत । ये प्रतिग्रहनिस्ने-
हास्ते नराः स्वर्गगामिनः ॥ ३८ ॥ भयार्तानां सशोकानां
दरिद्रान् व्याधिकर्शितान् । विमोचयन्ति ये जन्तून् ते नराः
स्वर्गगामिनः ॥ ३९ ॥ नरः परेषां प्रतिकूलमाचरन् प्रयाति
घोरं नरकं सुदुःसहम् । सदाऽनुकूलस्य नरस्य जीवितं सुखा-
वहं मुक्तिरदूरतः स्थिता ॥ ४० ॥

## कालचरितम् ४० ॥

मातुलो यस्य गोविन्दः पिता यस्य धनञ्जयः । सोऽपि कालवशं प्राप्तः कालो हि दुरतिक्रमः ॥१॥ पुरन्दरसहस्राणि चक्रवर्तिशतानि च । निर्वापितानि कालेन प्रदीपा इव वायुना ॥ २ ॥ म्रियमाणं मृतं बन्धुं शोचन्ते परिदेविनः । आत्मानं

नानुशोचन्ति कालेन कवलीकृतम् ॥ ३ ॥ अद्यैव हसितं गीतं पठितं यैः शरीरिभिः । अद्यैव ते न दृश्यन्ते कष्टं कालस्य चेष्टितम् ॥ ४ ॥ श्वःकार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् । नहि प्रतीक्षते मृत्युः कृतमस्य न वा कृतम् ॥ ५ ॥ पण्डिते चैव मूर्खे च वलवत्यपि निर्वले । ईश्वरे च दरिद्रे च मृत्योः सर्वत्र तुल्यता ॥ ६ ॥ आसन्नतामेति मृत्युरायुर्याति दिने दिने । आघातं नीयमानस्य वध्यस्येव पदे पदे ॥ ७ ॥ कालः पचति भूतानि कालः संहरते प्रजाः । कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ॥ ८ ॥ मृत्युर्जन्मवतां वीर देहेन सह जायते । अद्य वाऽब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः ॥९॥ तिष्ठन्तं वा शयानं वा मृत्युरभ्येति वै यदा । किं पल्वले मत्स्य इव सुखं स्वपिषि पुत्रक ॥ १० ॥ तुल्यजातिवयोरूपान्हतान्पश्यसि मृत्युना । कथं ते नास्ति निर्वेदो लौहं हि हृदयं तव ॥ ११ ॥ किं श्रिया किञ्च राज्येन किं कामेन किमीहितैः । दिनैः कतिपयैरेव कालः सर्वं निकृन्तति ॥१२॥ न चास्त्रेण न शौर्येण तपसा मेधया न च । न धृत्या न पुनस्त्यागान्मृत्योः कश्चिद्विमुच्यते ॥ १३ ॥ अनतिक्रमणीयो वै विधिरेष युधिष्ठिर । देवदानवगन्धर्वान्मृत्युर्हरति भारत ॥ १४॥ दुर्बलं बलवन्तञ्च शूरं भीरुं जडं कविम् । अप्राप्तं सर्वकामार्थान्मृत्युरादाय गच्छति ॥१५॥ महाविद्योऽल्पविद्यश्च बलवान्दुर्बलश्च यः ।

दर्शनीयो विरूपश्च सुभगो दुर्भगश्च यः ॥१६॥ सर्वं कालः समादत्ते गम्भीरः स्वेन तेजसा । तस्मिन्कालवशं प्राप्ते का व्यथा मे विजानतः ॥ १७ ॥ इदमद्य करिष्यामि श्वःकर्ताऽस्मीति वादिनम् । कालो हरति संप्राप्तो नदीवेग इव द्रुमम् ॥ १८ ॥ इदानीं तावदेवासौ मया दृष्टः कथं मृतः । इति कालेन ह्रियतां प्रलापः श्रूयते नृणाम् ॥ १९ ॥ नश्यन्त्यर्थास्तथा भोगः स्थानमैश्वर्यमेव च । जीवितं जीवलोकस्य कालेनागम्य नीयते ॥ २० ॥ नाकाले म्रियते जन्तुर्विद्धः शरशतैरपि । तृणाग्रेण सुसंस्पृष्टः प्राप्तकालो न जीवति ॥ २१ ॥ न मन्त्रा न तपो दानं न मित्राणि न बान्धवाः । शक्नुवन्ति परित्रातुं नरं कालेन पीडितम् ॥ २२ ॥ यथा व्यालगलस्थोऽपि भेको दंशानपेक्षते । तथा कालाहिना ग्रस्तो लोको भोगानशाश्वतान् ॥ २३ ॥ क्षेत्रापणगृहासक्तमन्यत्र गतमानसम् । वृकीवोरणमासाद्य मृत्युरादाय गच्छति ॥२४॥ न कालस्य प्रियः कश्चिद् द्वेष्यश्चास्य न विद्यते । आयुष्ये कर्मणि क्षीणे प्रसह्य हरते जनम् ॥ २५ ॥ हा कान्ते हा धनं पुत्राः क्रन्दमानः सुदारुणम् । मण्डूक इव सर्पेण मृत्युना गीर्यते नरः ॥ २६ ॥ यस्य वा मृत्युना सख्यं यो वा स्यादजरामरः । तस्येदं युज्यते वक्तुमिदं श्वो मे भविष्यति ॥२७॥ बलिनो मृत्युसिंहस्य संसारवनचारिणः । शृण्वन् व्याधिजरानादान् कथं तिष्ठसि निर्भयः ॥ २८ ॥ दशवर्षाः षोड-

शिका विंशत्त्रिंशतिकास्तथा । सर्वे वर्षशतादूर्ध्वं न भविष्यन्ति मानवाः ॥ २९ ॥ स्वमस्तकसमारूढं मृत्युं पश्येज्जनो यदि । आहारोऽपि न रोचेत किमुतान्या विभूतयः ॥ ३० ॥ को मोदते किमाश्चर्यं कः पन्था का च वार्तिका । वद मे चतुरः प्रश्नान्मृता जीवन्तु बान्धवाः ॥ ३१ ॥ पञ्चमेऽहनि षष्ठे वा शाकं पचति यो गृहे । अनृणी चाप्रवासी च स वारिचर मोदते ॥ ३२ ॥ अहन्यहनि भूतानि गच्छन्तीह यमालयम् । शेषाः स्थावरमिच्छन्ति किमाश्चर्यमतः परम् ॥ ३३ ॥ तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना नैको ऋषिर्यस्य मतं प्रमाणम् । धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः ॥ ३४ ॥ अस्मिन्महामोहमये कटाहे सूर्याग्निना रात्रिदिवेन्धनेन । मासर्तुदर्वीपरिघट्टनेन भूतानि कालः पचतीति वार्ता ॥३५॥ अशनं मे वसनं मे जाया मे बन्धुवर्गो मे । इति मे मे कुर्वाणं कालवृको हन्ति पुरुषाजम् ॥ ३६ ॥ महाबलान् पश्य महाऽनुभावान् प्रशास्य भूमिं धनधान्यपूर्णाम् । राज्यानि हित्वा विपुलाँश्च भोगान् गतान्नरेन्द्रान्वशमन्तकस्य ॥३७॥ विद्राविते शत्रुजने समस्ते समागतायामभितश्च लक्ष्म्याम् । सेव्यन्त एतानि सुखानि यावत्तावत्समायाति कुतोऽपि मृत्युः ॥३८॥ चला विभूतिः क्षणभङ्गि यौवनं कृतान्तदन्तान्तरवर्ति जीवितम् । तथाऽप्यवज्ञा परलोकसाधने नृणामहो विस्मयकारि चेष्टितम् ॥ ३९ ॥ प्राप्ता जरा यौवनमप्यतीतं बुधा

यतध्वं परमार्थसिद्ध्यै। आयुर्गतप्रायमिदं यतोऽसौ विश्राम्य विश्राम्य न याति कालः ॥ ४० ॥ भगीरथाद्याः सगरः ककुत्स्थो दशाननो राघवलक्ष्मणौ च । युधिष्ठिराद्याश्च बभूवुरेते सत्यं क्व याता बत ते नरेन्द्राः ॥ ४१ ॥ मा कुरु धनजनयौवनगर्वं हरति निमेषात्कालः सर्वम् । मायामयमिदमखिलं हित्वा ब्रह्मपदं प्रविशाशु विदित्वा ॥४२॥ आराध्य भूपतिमवाप्य ततो धनानि भुञ्जामहे वयमिह प्रसभं सुखानि । इत्याशया बत विमोहितमानसानां कालो जगाम मरणावधिरेव पुंसाम् ॥ ४३ ॥ संचिन्त्य संचिन्त्य तमुग्रदण्डं मृत्युं मनुष्यस्य विचक्षणस्य । वर्षाम्बुसिक्ता इव चर्मबन्धाः सर्वे प्रयत्नाः शिथिलीभवन्ति ॥४४॥ प्राप्ताः श्रियः सकलकामदुघास्ततः किं दत्तं पदं शिरसि विद्विषतां ततः किम् । संप्रीणिताः प्रणयिनो विभवैस्ततः किं कल्पस्थितं तनुभृतां तनुभिस्ततः किम् ॥४५॥ यत्रानेके क्वचिदपि गृहे तत्र तिष्ठत्यथैको यत्राप्येकस्तदनुबहवस्तत्र नैकोऽपि चान्ते । इत्थञ्चेमौ रजनिदिवसौ दोलयन्द्वाविवाक्षौ कालः काल्या भुवनफलके क्रीडति प्राणिशारैः ॥ ४६ ॥ भ्रातः कष्टमहो महान्स नृपतिः सामन्तचक्रञ्च तत् पार्श्वे तस्य च साऽपि राजपरिषत्ताश्चन्द्रबिम्बाननाः । उद्रिक्तः स च राजपुत्रनिवहस्ते वन्दिनस्ताः कथाः सर्वं यस्य वशादगात्स्मृतिपथं कालाय तस्मै नमः ॥४७॥ व्योमैकान्तविहारिणोऽपि विहगाः संप्रा-

प्लुवन्त्यापदं बध्यन्ते निपुणैरगाधसलिलान्मत्स्याः समुद्राद-
पि। दुर्नीतं किमिहास्ति किं सुचरितं कः स्थानलाभे गुणः
कालो हि व्यसनप्रसारितकरो गृह्णाति दूरादपि ॥ ४८ ॥
मान्धाता सुमहीपतिः क्षितितलेऽलङ्कारभूतो गतः सेतुर्येन
महोदधौ विरचितः क्वासौ दशास्यान्तकः। अन्ये चापि युधि-
ष्ठिरप्रभृतयो यावन्त एवाभवन् नैकेनापि समं गता वसुमती
मुञ्ज त्वया यास्यति ॥४९॥ रामे प्रव्रजनं बलेर्नियमनं पाण्डोः
सुतानां वनं वृष्णीनां निधनं नलस्य नृपते राज्यात्परिभ्रंश-
नम्। नाट्याचार्यकमर्जुनस्य पतनं संचिन्त्य लङ्केश्वरे सर्वः
कालवशेन नश्यति नरः को वा परित्रायते ॥ ५० ॥

## राजयोगः ४१ ॥

युजे वां ब्रह्म पूर्व्यं नमोभिर्विश्लोक एतु पथ्येव सूरेः।
शृण्वन्तु विश्वे अमृतस्य पुत्रा आये धामानि दिव्यानि तस्थुः ॥
१॥ यं विनिद्रा जितश्वासाः सत्त्वस्थाः संयतेन्द्रियाः। ज्योतिः
पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥ २ ॥ अपुण्यपुण्यो-
परमे यं पुनर्भवनिर्भयाः। शान्ताः संन्यासिनो यान्ति तस्मै
मोक्षात्मने नमः ॥३॥ अश्वमेधसहस्राणि राजसूयशतानि च।
ध्यानयोगस्य सर्वाणि कलां नार्हन्ति षोडशीम् ॥४॥ बुद्ध्या
भयं प्रणुदति तपसा विन्दते महत्। गुरुशुश्रूषया ज्ञानं शान्ति
योगेन विन्दति ॥ ५ ॥ यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा
सह। बुद्धिश्च न विचेष्टते तामाहुः परमां गतिम् ॥ ६ ॥ तां

योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् । अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥७॥ इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् । अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥ ८ ॥ गृहस्थानां सहस्रेण वानप्रस्थशतेन च । ब्रह्मचारिसहस्रेण योगाभ्यासी विशिष्यते ॥ ९ ॥ कृतार्थौ पितरौ तेन धन्यो देशः कुलञ्च तत् । जायते योगवान्यत्र दत्तमक्षय्यतां व्रजेत् ॥ १० ॥ यस्मिन्देशे वसेद्योगी ध्यानयोगविचक्षणः । सोपि देशो भवेत्पूतः किं पुनर्यस्य बान्धवः ॥११॥ जैगीषव्यो तथा विप्रो यथा चैवासितादयः। तुलाधारादयो वैश्याःक्षत्रिया जनकादयः ।१२। संप्राप्ताः परमां सिद्धिं पूर्वाभ्यस्तस्वयोगतः । धर्मव्याधादयश्चैव शूद्राः पैलवकादयः ॥१३॥ मैत्रेयी सुलभा शार्ङ्गी शाण्डिली च तपस्विनी । एते चान्ये च बहवोऽनेकदेहगता अपि । ज्ञाननिष्ठां परां प्राप्ताः पूर्वाभ्यस्तस्वयोगतः ॥१४॥ तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः। कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥१५॥ इहामुत्र विरक्तस्य संसारं प्रजिहासतः । जिज्ञासोरेव कस्यापि योगेऽस्मिन्नधिकारिता ॥१६॥ विषयासक्तचित्तो हि यतिर्मोक्षं न विन्दति । यत्नेन विषयासक्तिं तस्माद्योगी विवर्जयेत् ॥१७॥ विषयेन्द्रियसंयोगं केचिद्योगं वदन्ति वै । अधर्मो धर्मबुद्ध्या तु गृहीतस्तैरपण्डितैः ॥१८॥ मुक्तिमिच्छसि चेत्तात विषयान्विषवत्त्यज । क्षमार्जवदयाशौचं सत्यं पीयूषवत्पिब ॥ १९ ॥

यमश्च नियमश्चैव तृतीयमासनं मतम्। प्राणायामस्तथा गार्गी प्रत्याहारश्च धारणा। ध्यानं समाधिरेतानि योगाङ्गानि निबोध मे ॥२०॥ ब्रह्मचर्यमहिंसा च सत्यास्तेयापरिग्रहान्। सेवेत योगी निष्कामो योग्यतां मनसो नयन् ॥२१॥ कर्मणा मनसा वाचा परद्रव्येषु निःस्पृहा। अस्तेयमिति संप्रोक्तमृषिभिस्तत्वदर्शिभिः ॥ २२ ॥ परमापद्गतेनापि न कार्यः स्तेय अल्पकः। स्तेयादप्यधिकः कश्चिन्नास्त्यधर्मइतिस्मृतः ॥ २३ ॥ स्वाध्यायशौचसन्तोषतपांसि नियतात्मवान्। कुर्वीत ब्रह्मणि तथा परस्मिन् प्रवणं मनः ॥२४॥ द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परञ्च यत्। शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ २५ ॥ शौचन्तु द्विविधं प्रोक्तं बाह्ममाभ्यन्तरं तथा। मृज्जलाभ्यां स्मृतं बाह्यं मनः शुद्धिस्तथाऽन्तरम् ॥२६॥ सर्वेषामेव शौचानामन्तः शौचं परं स्मृतम्। योऽन्तः शुचिर्हि स शुचिर्न मृद्वारिशुचिः शुचिः ॥२७॥ मृत्तिकानां सहस्रैस्तु जलकुम्भशतैरपि। न शुद्ध्यन्ति दुरात्मानो येषां भावो न निर्मलः ॥ २८ ॥ न शरीरमलत्यागान्नरो भवति निर्मलः। मानसे तु मले त्यक्ते भवत्यन्तः सुनिर्मलः ॥ २९ ॥ नोदकक्लिन्नगात्रस्तु स्नात इत्यभिधीयते। स स्नातो यो दमस्नातः स बाह्याभ्यन्तरः शुचिः ॥ ३० ॥ मनसश्चेन्द्रियाणाञ्च निग्रहः परमन्तपः। स ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते ॥ ३१ ॥ मासपक्षोपवासेन मन्यन्ते यत्तपो

जनाः । आत्मविद्योपघातस्तु न तपस्तत्सतां मतम् ॥३२॥ एकान्ते विजने देशे पवित्रे निरुपद्रवे । कम्बलाजिनवस्त्राणामुपर्यासनमभ्यसेत् ॥३३॥ शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः । नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥३४॥ वक्त्रेणोत्पलनालेन तोयमाकर्षयेन्नरः । एवं वायुर्गृहीतव्यः पूरकस्येति लक्षणम् ॥ ३५ ॥ उत्क्षिप्य वायुमाकाशं शून्यं कृत्वा निरात्मकम् । शून्यभावेन युञ्जीयाद्रेचकस्येति लक्षणम् ॥ ३६ ॥ नोच्छ्वसेन्न च निःश्वसेन्नैव गात्राणि चालयेत् । एवं तावन्नियुञ्जीत कुम्भकस्येति लक्षणम् ॥३७॥ शब्दादिभ्यः प्रवृत्तानि यदक्षाणि यतात्मभिः । प्रत्याह्रियन्ते योगेन प्रत्याहारस्ततः स्मृतः ॥३८॥ इन्द्रियाणां विचरतां विषयेषु स्वभावतः । बलादाहरणं तेषां प्रत्याहारः स उच्यते ॥ ३९ ॥ देशबन्धस्तु चित्तस्य धारणेति प्रकीर्तिता । ध्यानशब्देन सा ज्ञेया या प्रत्ययैकतानता ॥४०॥ सलिले सैन्धवं यद्वत्साम्यं भजति योगतः । तथात्ममनसोरैक्यं समाधिरभिधीयते ॥ ४१ ॥ राजत्वात्सर्वयोगानां राजयोग इति स्मृतः। राजन्तं दीप्यमानं तं परमात्मानमव्ययम् । प्रापयेद्देहिनां यस्तु राजयोगः स कीर्तितः ॥ ४२ ॥ धर्ममेघमिमं प्राहुः समाधिं योगवित्तमाः । वर्षत्येष यतो धर्मामृतधाराः सहस्रशः ॥ ४३ ॥ नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः । न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥ ४४ ॥ युक्ताहार-

विहारस्य युक्तचेष्टस्य कर्मसु । युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥४५॥ अदृष्टविग्रहो देवो भावग्राह्यो मनोमयः। तस्योङ्कारः स्मृतो नाम तेनाहूतः प्रसीदति ॥४६॥ ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा। स्रवत्यनोंकृतं पूर्वं परस्ताच्च विशीर्यते ॥४७॥ तस्मादोमित्युदाहृत्य यज्ञदानतपः क्रियाः। प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥४८॥ सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्य्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत् ॥४९॥ एतद्ध्येवाक्षरं ब्रह्म एतदेवाक्षरं परम् । एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥ ५० ॥ एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् । एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥५१॥ युञ्जीत प्रणवे चेतः प्रणवो ब्रह्म निर्भयम् । प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित् ॥ ५२ ॥ स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम् । ध्याननिर्मथनाभ्यासादेवं पश्येन्निगूढवत् ॥ ५३ ॥ असंशयं महाबाहो मनो दुर्निग्रहं चलम् । अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥५४ ॥ धनुर्गृहीत्वौपनिषदं महाऽस्त्रं शरं ह्युपासानिशितं सन्धयीत । आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सौम्य विद्धि ॥ ५५ ॥ प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते । अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥५६॥ यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथ आत्मा-

नमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः ॥५७॥ न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा । ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः ॥५८॥ क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः । तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः ॥ ५९॥ समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखं भवेत् । न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तः करणेन गृह्यते ॥ ६० ॥

## विवेकः ४२ ॥

ओ३म् ॥ वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥१॥ यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति । सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥२॥ यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥३॥ प्रतिबोधविदितं मतममृतत्वं हि विन्दते । आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम् ॥ ४ ॥ यस्मान्मोक्षसुखादन्यत्सुखं क्वापि न विद्यते । तस्मान्मुमुक्षुणा भाव्यं नैव भोगेच्छुना क्वचित् ॥ ५ ॥ ये हि संस्पर्शजा भोगा दुःखयोनय एव ते । आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥६॥ कर्तव्यमेव कर्तव्यं प्राणैः कण्ठगतैरपि । अकर्तव्यं न कर्तव्यं प्राणैः कण्ठगतैरपि ॥७॥ एकाकी

च्चिन्तयेन्नित्यं विविक्ते हितमात्मनः। एकाकी चिन्तयानो हि परं श्रेयोऽधिगच्छति॥८॥ अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः। सर्वतः सारमादद्यात्पुष्पेभ्य इव षट्पदाः॥९॥ यो हि न कुरुते पापं सर्वभूतेषु कर्हिचित्। कर्मणा मनसा वाचा स ज्ञानी कथ्यते बुधैः॥१०॥ न तं पश्यामि लोकेऽस्मिन्यो न जातो मरिष्यति। इति संप्रत्ययं बुद्ध्वा स्वस्थैस्तु कथमास्यते॥११॥ न व्याधयो न च यमः श्रेयः प्राप्तुं प्रतीक्षते। यावदेव भवेत्कालस्तावच्छ्रेयः समाचरेत्॥१२॥ यावन्न ग्रस्यसे रोगैर्यावन्नोपैति ते जरा। यावन्न क्षीयते चायुस्तावच्छ्रेयः समाचर॥१३॥ न च ते पुत्रदारेषु कर्तव्या मतिरीदृशी। कथयन्तु कृपणा ह्येतत् वर्तिष्यन्ते मया विना॥१४॥ यद्गर्भे पालयत्येनं यच्च संवर्धयत्यपि। तदेवास्य स्वकं कर्म सुखदुःखोपपादने॥१५॥ स्वकृतैर्जायते जन्तुः स्वकृतैरेव वर्धते। सुखदुःखे तथा मृत्युं स्वकृतैरेव विन्दति॥ १६॥ क्वासं क्व च गमिष्यामि कश्चाहं किमिहागतः। को बन्धुर्मम कस्याहमित्यात्मानं विचिन्तय॥ १७॥ पुरासीत् स्वजनस्तेऽन्यः साम्प्रतं वर्तते परः। देहान्ते भविता चान्यस्तस्मात्त्वं परतः परः॥१८॥ विवेक एव व्यसनं पुंसां क्षपयितुं क्षमः। अपहर्तुं समर्थोऽसौ रविरेव निशातमः॥ १९॥ नानृतात्पातकं किञ्चिन्न सत्यात्सुकृतं परम्। विवेकान्न परो बन्धुरिति वेदविदो विदुः॥२०॥ आत्मानं विन्दते येन सर्वभूतगुहाशयम्।

श्लोकेन यदि वाऽर्धेन क्षीणं तस्य प्रयोजनम् ॥२१॥ प्राप्य चाप्युत्तमं जन्म लब्ध्वा चेन्द्रियसौष्ठवम् । न वेत्त्यात्महितं यस्तु स भवेदात्मघातकः ॥२२॥ मोक्षद्वारे द्वारपालाश्चत्वारः परिकीर्तिताः । शमो विचारः सन्तोषश्चतुर्थः साधुसङ्गमः ॥२३॥ संतोषः साधुसङ्गश्च विचारोऽथ शमस्तथा । एत एव भवाम्भोधावुपायास्तरणे नृणाम् ॥२४॥ सन्तोषः परमो लाभः सत्सङ्गः परमा गतिः । विचारः परमं ज्ञानं शमो हि परमं सुखम् ॥ २५ ॥ आत्मानं रथिनं विद्धि शरीरं रथमेव तु । बुद्धिन्तु सारथिं विद्धि मनः प्रग्रहमेव च ॥२६॥ इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥२७॥ यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा । तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ २८ ॥ यस्तु विज्ञानवान्भवति युक्तेन मनसा सदा । तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥२९॥ यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः । न स तत्पदमाप्नोति संसारञ्चाधिगच्छति ॥ ३० ॥ यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः । स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥ ३१ ॥ विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमम्पदम् ॥३२॥ सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि । समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति ॥ ३३ ॥ त्यज दुर्जनसंसर्गं भज साधुसमागमम् । कुरु

पुण्यमहोरात्रं स्मर नित्यमनित्यताम् ॥३४॥ यत्प्रातः संस्कृतञ्चान्नं सायं सद्यो विनश्यति । तदीयरसनिष्पन्ने काये का नाम नित्यता ॥३५॥ सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः । शरीरकस्यापि कृते मूढाः पापानि कुर्वते ॥ ३६ ॥ जलमग्निर्विषं शस्त्रं क्षुद्व्याधिः पतनं गिरेः । निमित्तं किञ्चिदासाद्य देही प्राणान्विमुञ्चति ॥ ३७ ॥ एकोऽद्य प्रातरपरे पश्चादन्ये पुनः परे । सर्वे निःसीम्नि संसारे यान्ति कः केन शोच्यते ॥३८॥ अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत । अव्यक्तनिधनान्येव तत्र का परिदेवना ॥३९॥ पञ्चभिर्निर्मिते देहे पञ्चत्वञ्च पुनर्गते । स्वां स्वां योनिमनुप्राप्ते तत्र का परिदेवना ॥ ४० ॥ एकसार्थप्रवृत्तानां सर्वेषां तत्र गामिनाम् । यद्येकस्त्वरितो याति तत्र का परिदेवना ॥४१॥ अकाण्डपातजातानामस्त्राणां मर्मभेदिनाम् । गाढशोकप्रहाराणामचिन्तैव महौषधम् ॥ ४२ ॥ सन्तापाद् भ्रश्यते रूपं सन्तापाद् भ्रश्यते बलम् । सन्तापाद् भ्रश्यतेपा ज्ञानं सन्तापाद्व्याधिमृच्छति ॥४३॥ अज्ञानं कारणं न स्याद्वियोगो यदि कारणम् । शोको दिनेषु गच्छत्सु वर्द्धतामपयाति किम् ॥४४॥ दुःखी दुःखाधिकान्पश्येत्सुखी पश्येत्सुखाधिकान् । आत्मानं हर्षशोकाभ्यां शत्रुभ्यामिव नार्पयेत् ॥४५॥ व्यसनं प्राप्य यो मोहात्केवलं परिदेवयेत् । क्रन्दनं वर्धयत्येव तस्यान्तं नाधिगच्छति ॥ ४६ ॥ केवलं व्यसनस्योक्तं भेषजं नयपण्डितैः ।

तस्योच्छेदसमारम्भो विषादपरिवर्जनम् ॥ ४७ ॥ शोककाले शुचो मा त्वं हर्षकाले च माहृषः । अतीतानागते हित्वा प्रत्युत्पन्नेन वर्तय ॥४८॥ पुनर्वित्तं पुनर्मित्रं पुनर्भार्या पुनर्मही । एतत्सर्वं पुनर्लभ्यं न शरीरं पुनः पुनः ॥४९॥ अप्रार्थितानि दुःखानि यथैवायान्ति देहिनाम् । सुखान्यपि तथा यान्ति दैन्यमत्रातिरिच्यते ॥ ५० ॥ गते शोको न कर्तव्यो भविष्यं नैव चिन्तयेत् । वर्तमानेन कालेन वर्तयन्ति विचक्षणाः ॥ ५१ ॥ सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् । सुखदुःखे मनुष्याणां चक्रवत्परिवर्ततः ॥ ५२ ॥ यदापि शोचतः शोको व्यसनं नापकर्षति । सामर्थ्यं शोचतो नास्त त्यतो ऽहं नाद्य शोचिमि ॥ ५३ ॥ अनवाप्यं च शोकेन शरीरं चोपतप्यते । अमित्राश्च प्रहृष्यन्ति मा स्म शोके मनः कृथाः ॥५४॥ शोको नाशयते धैर्यं शोको नाशयते श्रुतम् । शोको नाशयते सर्वं नास्ति शोकसमो रिपुः ॥५५॥ ये शोकमनुवर्तन्ते न तेषां विद्यते सुखम् । तेजश्च क्षयते तेषां न त्वं शोचितुमर्हसि । शोकेनाभिप्रपन्नस्य जीविते चापि संशयः ॥ ५६ ॥ अशोचन् प्रतिकुर्वीत यदि पश्येत्पराक्रमम् । भैषज्यमेतद्दुःखस्य यदेतन्नानुचिन्तयेत् ॥ ५७ ॥ चिन्त्यमानं हि न व्येति भूयश्चापि प्रवर्धते । अनिष्टसंप्रयोगाच्च विप्रयोगात्प्रियस्य च ॥५८॥ मानुषा मानसैर्दुःखैर्दह्यन्ते चाल्पबुद्धयः । नार्थो न धर्मो न सुखं यदेतदनुशोचसि ॥ ५९ ॥ मानसेन

हि दुःखेन शरीरमुपतप्यते। अयःपिण्डेन तप्तेन कुम्भसंस्थ-
मिवोदकम् ।६०। शारीराज्जायते व्याधिर्मानसो नात्र संशयः।
मानसाज्जायते चापि शारीर इति निश्चयः ॥ ६१॥ मानसं
शमयेत्तस्माज्ज्ञानेनाग्निमिवाम्बुना । प्रशान्ते मानसे ह्यस्य
शारीरमुपशाम्यति ॥६२॥ प्रज्ञया मानसं दुःखं हन्याच्छा-
रीरमौषधैः । एतद्विज्ञानसामर्थ्यं न बालैः समतामियात् ॥
६३ ॥ भये वा यदि वा हर्षे संप्राप्ते यो विमर्शयेत् । कृत्यं
न कुरुते वेगान्न स सन्तापमाप्नुयात् ॥ ६४ ॥ यत्कुमाराः
कुमार्य्यश्च वैरं कुर्युरचेतसः । न तत्प्राज्ञोऽनुकुर्वीत न विदुस्ते
बलाबलम् ॥६५॥ सांसारिकसुखासक्तं ब्रह्माहमितिवादिनम् ।
कर्मब्रह्मोभयभ्रष्टं तं त्यजेदन्त्यजं यथा ॥६६॥ यदि नामास्य
कायस्य यदन्तस्तद्बहिर्भवेत् । दण्डमादाय लोकोऽयं शुनः
काकांश्च वारयेत् ॥६७॥ स्थानाद्बीजादुपष्टम्भान्निष्पन्दान्नि-
धनादपि। कायमाधेयशौचत्वात्पण्डिता ह्यशुचिं विदुः ॥६८॥
अमेध्यपूर्णं कृमिजालसंकुलं स्वभावदुर्गन्धमशौचमध्रुवम् ।
कलेवरं मूत्रपुरीषभाजनं रमन्ति मूढा न रमन्ति पण्डिताः
॥६९॥ वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरो-
ऽपराणि । तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति
नवानि देही ॥ ७० ॥ श्रद्धया साध्यते धर्मो महद्भिर्नार्थरा-
शिभिः । अकिञ्चना हि मुनयः श्रद्धावन्तो दिवं गताः॥७१॥
श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः । ज्ञानं लब्ध्वा परां

शान्तिमचिरेणाधिगच्छति ॥ ७२ ॥ अश्रद्धा परमं पापं श्रद्धा पापप्रमोचिनी । जहाति पापं श्रद्धावान् सर्पो जीर्णामिव त्वचम् ॥७३॥ निर्विवेकतया बाल्यं कामोन्मादेन यौवनम् । वृद्धत्वं विकलत्वेन सदा सोपद्रवं नृणाम् ॥ ७४ ॥ प्रातर्मूत्र-पुरीषाभ्यां मध्याह्ने क्षुत्पिपासया । तृप्ताः कामेन बाध्यन्ते प्राणिनो निशि निद्रया ॥७५॥ यथा काष्ठञ्च काष्ठञ्च समेयातां महोदधौ । समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥ ७६ ॥ कायः सन्निहितापायः सम्पदः पदमापदाम् । समागमाः सापगमाः सर्वमुत्पादि भंगुरम् ॥ ७७ ॥ प्रतिक्षणमयं कायः क्षीयमाणो न लक्ष्यते । आमकुम्भ इवाम्भःस्थो विशीर्णः सन्विभाव्यते ॥७८॥ यथा हि पथिकः कश्चिच्छायामाश्रित्य तिष्ठति । विश्रम्य च पुनर्गच्छेत्तद्वद्भूतसमागमः ॥७९॥ पुत्र-मित्रकलत्रेषु सक्ताः सीदन्ति जन्तवः । सरः पङ्कार्णवे मग्ना जीर्णा वनगजा इव ॥ ८० ॥ मृत्योर्बिभेषि किं मूढ भीतं मुञ्चति किं यमः । अजातं नैव गृह्णाति कुरु यत्नमजन्मनि ॥८१॥ तुल्ये प्रियाप्रिये यस्य सुखदुःखे तथैव च । अतीता-नागते चोभे स वै सर्वधनी नरः ॥ ८२ ॥ यदा चायं न बिभेति यदा चास्मान्न बिभ्यति । यदा नेच्छति न द्वेष्टि ब्रह्म सम्पद्यते तदा ॥८३॥ उभाभ्यामपि पक्षाभ्यां यथा खे पक्षिणां गतिः । तथैव ज्ञानकर्मभ्यां प्राप्यते ब्रह्म शाश्वतम् ॥ ८४ ॥ यदा न कुरुते भावं सर्वभूतेषु पापकम् । कर्मणा मनसा वाचा

ब्रह्म सम्पद्यते तदा ॥ ८५ ॥ विनीतमानमोहश्च दुष्टसङ्गवि-
वर्जितः । विज्ञातब्रह्मतत्त्वस्य निर्वाणमुपपद्यते ॥८६॥ अनित्यं
यौवनं रूपं जीवितं द्रव्यसञ्चयः । ऐश्वर्यं प्रियसंवासो मुह्ये-
त्तत्र न पण्डितः ॥ ८७ ॥ लोहदारुमयैः पाशैः पुमान् बद्धो
विमुच्यते । पुत्रदारमयैः पाशैर्बद्धो नैव विमुच्यते ॥ ८८ ॥
आदरेण यथा स्तौति धनवन्तं धनेच्छया । तथा चेद्विश्व-
कर्तारं को न मुच्येत बन्धनात् ॥८९॥ मितमायुर्वयो नित्यं
नैति यातं कदाचन । परामृशन्ति तदपि न भवं भोगलोलु-
पाः ॥ ९० ॥ इहैव नरकव्याधेश्चिकित्सां न करोति यः ।
गत्वा निरौषधं स्थानं सरुजः किं करिष्यति ॥९१॥ आहारा
विविधा भुक्ताः पीता नानाविधाः स्तनाः । मातरो विविधा
दृष्टाः पितरः सुहृदस्तथा ॥९२॥ यन्मया परिजनस्यार्थे कृतं
कर्म शुभाशुभम् । एकाकी तेन दह्येऽहं गतास्ते फलभोगिनः
॥९३॥ अहो दुःखोदधौ मग्नो न पश्यामि प्रतिक्रियाम् । यदि
योन्याः प्रमुच्येऽहं तत्प्रपद्ये महेश्वरम् ॥९४॥ अशुभक्षयकर्तारं
फलमुक्तिप्रदायकम् । यदि योन्याः प्रमुच्येऽहं तत्सांख्यं यो-
गमभ्यसे ॥९५॥ अशुभक्षयकर्तारं फलमुक्तिप्रदायकम् । यदि
योन्याः प्रमुच्यामि ध्याये ब्रह्म सनातनम् ॥ ९६ ॥ यदेवेह
तदमुत्र यदमुत्र तदन्विह । मृत्योः स मृत्युमाप्नोति य इह
नानेव पश्यति ॥ ९७ ॥ द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव
च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ ९८ ॥

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥९९॥ पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया। यस्यान्तःस्थानि भूतानि येन सर्वमिदन्ततम् ॥ १०० ॥ ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥ १०१ ॥ तमेव शरणं गच्छ सर्वभावेन भारत। तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥ १०२ ॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ १०३ ॥ यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥१०४॥ यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः। अथ मर्त्योऽमृतो भवत्येतावदनुशासनम् ॥ १०५ ॥ अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषं सिनीतः। तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते ॥१०६॥ श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सम्परीत्य विविनक्ति धीरः। श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते ॥ १०७ ॥ न साम्परायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम्। अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे ॥१०८॥ पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम्। अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥ १०९ ॥ पराञ्चि खानि व्यतृणत्स्वयम्भूस्त-

स्मात्पराङ्पश्यति नान्तरात्मन् । कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥ ११० ॥ सहसा विदधीत न क्रियामविवेकः परमापदाम्पदम्। वृणुते हि विमृश्य कारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥ १११ ॥ पाषाणखण्डेष्वपि रत्नबुद्धिः कान्तेति धीः शोणितमांसपिण्डे । पञ्चात्मके वर्ष्मणि चात्मभावो जयत्यसौ काचन मोहलीला ॥११२॥ अविदितपरमानन्दो वदति विषयमेव रमणीयम् । तिलतैलमेव मृष्टं येन न दृष्टं घृतं क्वापि ॥११३॥ निखिलं जगदेव नश्वरं पुनरस्मिन्नितरां कलेवरम् । अथ तस्य कृते कियानयं क्रियते हन्त जनैः परिश्रमः ॥ ११४ ॥ नन्दति मन्दाः श्रियमाप्य नित्यं परं विषीदन्ति विपद्गृहीताः । विवेकदृष्ट्या चरतां नराणां श्रियो न किञ्चिद्विपदो न किञ्चित् ॥११५॥ दधाति तावदमी विषयाः सुखं स्फुरति यावदियं हृदि मूढता । मनसि तत्त्वविदान्तु विवेचके क्व विषयाः क्व सुखं क्व परिग्रहाः॥११६॥ इह चेदवेदीदथ सत्यमस्ति न चेदवेदीन्महती विनष्टिः। भूतेषु भूतेषु विचिन्त्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति॥११७॥ यदुपतेः क्व गता मथुरापुरी रघुपतेः क्व गतोत्तरकोशला । इति विचिन्त्य मनः स्थिरतां कुरु न सदिदं जगदित्यवधारय ॥ ११८ ॥ प्रादुर्भवन्ति वपुषः कति वा न कीटा यान्यत्नतः खलु तनोरपसारयन्ति । मोहः क एष जगतो यदपत्यसंज्ञां तेषां विधाय परिशोषयति स्वदेहम् ॥११९॥ गुणवदगुणवद्वा

कुर्वता कार्यमादौ परिणतिरवधार्या यत्नतः पण्डितेन। अतिरभसकृतानां कर्मणामाविपत्तेर्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ १२० ॥ प्राणाघातान्निवृत्तिः परधनहरणे संयमः सत्यवाक्यं काले शक्त्या प्रदानं युवतिजनकथामूकभावः परेषाम्। तृष्णास्रोतोविभङ्गो गुरुषु च विनयः सर्वभूतानुकम्पा सामान्यः सर्वशास्त्रेष्वनुपहतविधिः श्रेयसामेष पन्थाः ॥ १२१ ॥

## वैराग्यम् ४३ ॥

प्रचण्डवासनावातैरुद्धूता नौर्मनोमयी। वैराग्यकर्णधारेण विना रोद्धुं न शक्यते ॥१॥ नात्यक्त्वा सुखमाप्नोति नात्यक्त्वा विन्दते परम्। नात्यक्त्वा चाभयः शेते त्यक्त्वा सर्वं सुखी भवेत् ॥ २ ॥ रागिण्यपि विरागिण्यः स्त्रियस्तासु रमेत कः। अहञ्च कलये मुक्तिं या विरागिणि रागिणी ॥ ३ ॥ पूरयित्वाऽर्थिनामाशां प्रियं कृत्वा द्विषामपि। पारं गत्वा श्रुतौघस्य धन्या वनमुपासते ॥ ४ ॥ यावतः कुरुते जन्तुः सम्बन्धान् मनसः प्रियान्। तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥५॥ निःस्नेहो याति निर्वाणं स्नेहोऽनर्थस्य कारणम्। निःस्नेहेन प्रदीपेन यदेतत्प्रकटीकृतम् ॥ ६ ॥ येषु येषु दृढं बद्धा भावना दृढवस्तुषु। तानि तानि विनष्टानि दृष्टानि किमिहोत्तमम् ॥७॥ गतेनापि न सम्बन्धो न सुखेन भविष्यता। वर्तमानं क्षणातीतं सङ्गतिः कस्य केन

वा ॥ ८ ॥ पृथिवी दह्यते यत्र मेरुश्चापि विशीर्यते । सुशोषं सागरजलं शरीरे तत्र का कथा ॥ ९ ॥ लब्धास्त्यक्ताश्च संसारे यावन्तो बान्धवास्त्वया । न सन्ति खलु तावन्त्यो गङ्गायामपि बालुकाः ॥१०॥ मातृपितृसहस्राणि पुत्रदारशतानि च । तवानन्तानि यातानि कस्य ते कस्य वा भवान् ॥११॥ सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः । संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥१२॥ जन्मैव व्यर्थतां नीतं भवभोगप्रलोभिना । काचमूल्येन विक्रीतो हन्त चिन्तामणिर्मया ॥ १३ ॥ कोटयो ब्रह्मणां याता गताः सर्गपरम्पराः । प्रयाताः पांसुवद्भूपाः का धृतिर्मम जीवने ॥ १४ ॥ रात्र्यां रात्र्यां व्यतीतायामायुरल्पतरं यदा । स्वल्पोदके मत्स्य इव धृतिं विन्देत कः पुमान् ॥ १५ ॥ यस्यां रात्र्यां व्यतीतायां न किंञ्चिच्छुभमाचरेत् । तदेव बन्ध्यं दिवसं प्रति विद्याद्विचक्षणः ॥१६॥ जीवितं मरणान्तं हि जरान्ते रूपयौवने । संपदो विपदान्ता वा अत्र को रतिमाप्नुयात्॥१७॥न बन्धुरस्ति ते कश्चिन्न त्वं बन्धुश्च कस्यचित् । पथि सङ्गतमेवैतद्दारबन्धुसुहृज्जनैः॥१८॥अनित्ये सति मानुष्ये विद्युत्स्फुरणचञ्चले । ये रमन्ति नमस्तेभ्यःसाहसं किमतःपरम्।१९।तदनित्यमिति ज्ञात्वा सर्वभावेष्वनित्यताम् ।सर्वारम्भान् परित्यज्य भव चात्मनि योगवित् ।२०। सवृक्षौषधिरत्नेयं सहसत्त्ववनाकरा । तानिदानीं न पश्यामि यैर्भुक्तेयं पुरा मही ॥२१॥ सञ्चितं सञ्चितं द्रव्यं

नष्टं तव पुनः पुनः । कदाचिन्मोक्ष्यसे मूढ धनेहां धनकामुक ॥ २२ ॥ अद्य श्वो वा परश्वो वा मरणं निश्चितं मम । इति मत्वा गृहं त्यक्त्वा हरिसंस्मरणं कुरु ॥ २३ ॥ गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः । अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत् ॥ २४ ॥ उद्घाटितनवद्वारे पञ्जरे विहगोऽनिलः । यत्तिष्ठति तदाश्चर्यं प्रयाणे विस्मयः कुतः ॥ २५ ॥ स्वदेहाशुचिगन्धेन न विरज्येत यः पुमान् । वैराग्यकारणं तस्य किमन्यदुपदिश्यते ॥ २६ ॥ अथ ये महतां मूर्ध्नि ते दिवैर्निपतन्त्यधः । हन्त चित्त महत्तायाः कैषा विश्वस्तता तव ॥२७॥ अधः पश्यसि किं वृद्ध किञ्च ते पतितं भुवि । अरे मूढ न जानासि गतं मे यौवनं धनम् ॥२८॥ यश्चैतान्प्राप्नुयात्सर्वान् यश्चैतान्केवलांस्त्यजेत् । प्रापणात्सर्वकामानां परित्यागो विशिष्यते ॥२९॥ अनित्ये प्रियसंवासे संसारे चक्रवद्गतौ । पथि संगतमेवैतद्भ्राता माता पिता सखा ॥ ३० ॥ नायमत्यन्तसंवासो लभ्यते जातु केनचित् । अपि स्वेन शरीरेण किमुतान्येन केनचित् ॥ ३१ ॥ क्व नु तेऽद्य पिता राजन् क्व नु तेऽद्य पितामहः । न त्वं पश्यसि तानद्य न त्वां पश्यन्ति तेऽनघ ॥३२॥ जरामृत्यू हि भूतानां खादितारौ वृकाविव । बलिनां दुर्बलानाञ्च ह्रस्वानां महतामपि ॥३३॥ न कश्चिज्जात्वतिक्रामेज्जरामृत्यू हि मानवः । अपि सागरपर्यन्तां विजित्येमां वसुन्धराम्॥३४॥ प्रभावैरन्वितास्तैस्तैः पार्थिवेन्द्राः सहस्रशः

ये गता पृथिवीं त्यक्त्वा इति ज्ञात्वा विमुच्यते ॥३५॥ गता-न्नृषींस्तथा देवानसुरांश्च तथा गतान् । लोकादस्मात्परं लोकं यः पश्यति स पश्यति ॥३६॥ बद्धास्था ये शरीरेषु बद्धास्था ये जगत्स्थितौ । तान्मोहमदिरोन्मत्तान्धिग्धिगस्तुपुनः पुनः ॥३७॥ धनानि बान्धवा भृत्या मित्राणि विभवाश्च ये । वि-नाशभयभीतस्य सर्वं नीरसतां गतम् ॥३८॥ नष्टं मृतमति-क्रान्तं नानुशोचन्ति पण्डिताः । पण्डितानाञ्च मूर्खाणां वि-शेषोऽयं यतः स्मृतः ॥ ३९ ॥ यतो यतो निवर्तते ततस्ततो विमुच्यते । निवर्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपि ॥४०॥ न मातृपुत्रबान्धवा न संस्तुतः प्रियो जनः । अनुव्रजन्ति संकटे व्रजन्तमेकपातिनम् ॥४१॥ यावद्वित्तोपार्जनसक्तस्ता-वन्निजपरिवारो रक्तः । तदनु च जरया जर्जरदेहे वार्तां को-ऽपि न पृच्छति गेहे ॥४२॥ मरणं प्रकृतिः शरीरिणां विकृति-र्जीवितमुच्यते बुधैः । क्षणमप्यवतिष्ठते श्वसन्यदि जन्तुर्ननुलाभ-वानसौ ॥४३॥ किन्ते धनैर्बन्धुभिरेव वा किं दारैश्च किं ब्राह्मण यो मरिष्यति । आत्मानमन्विच्छ गुहां प्रविष्टं पितामहास्ते क्व गताः पिता च ॥४४॥ मृतं पुत्रं दुःखपुष्टं मनुष्या उत्क्षिप्य राजन् स्वगृहान्निर्हरन्ति । तं मुक्तकेशाः करुणं रुदन्ति चिता-मध्ये काष्ठमिव क्षिपन्ति ॥४५॥ हरिष्यमाणो बहुधा परस्वं करिष्यमाणः सुतसम्पदादि । धरिष्यमाणोऽरिशिरःसु पादं न स्वं मरिष्यन्तमवैति कोऽपि ॥४६॥ प्रबलानिलवेगवेल्लित-

ध्वजचीनांशुककोटिचञ्चले । अपि मूढमतिः कलेवरे कुरुते कः स्थिरबुद्धिमम्बिके ॥४७॥ कति नाम सुता न लालिताः कति वा नेह वधूरभुञ्जिहि । क नु ते क च ताः क वा वयं भवसङ्गः खलु पान्थसंगमः ॥४८॥ भ्रमतां भववर्त्मनि भ्रमान्नहि किञ्चित्सुखमम्ब लक्षये । तदवाप्य चतुर्थमाश्रमं प्रयतिष्ये भवबन्धमुक्तये ॥४९॥ यथा प्रपायां बहवो मिलन्ते क्षणे द्वितीये वत भिन्नमार्गाः । प्रयान्ति तद्वद्बहुनामभाजो गृहे भवन्त्यत्र न कश्चिदन्ते ॥ ५० ॥ सुरूपं शरीरं नवीनं कलत्रं धनं मेरुतुल्यं वचश्चारुचित्रम् । हरेरंघ्रियुग्मे मनश्चेदलग्नं ततः किन्ततः किन्ततः किन्ततः किम् ॥५१॥ पुनः प्रभातं पुनरेव शर्वरी पुनः शशांकः पुनरुद्यते रविः । कालस्य किं गच्छति याति यौवनं तथापि लोकः कथितं न बुध्यते ॥ ५२ ॥ कृतान्तस्य दूती जरा कर्णमूले समागत्य वक्तीति लोकाः शृणुध्वम् । परस्त्रीपरद्रव्यवाञ्छां त्यजध्वं भजध्वं रमानाथपादारविन्दम् ॥ ५३ ॥ नलिनीदलगतजलमतितरलं तद्वज्जीवितमतिशयचपलम् । विद्धि व्याधिव्यालग्रस्तं लोकं शोकहतश्च समस्तम् ॥५४॥ चेतोहरा युवतयः सुहृदोऽनुकूलाः सद्बान्धवाः प्रणयगर्भगिरश्च भृत्याः । गर्जन्ति दन्तिनिवहास्तरलास्तुरङ्गाः संमीलने नयनयोर्नहि किञ्चिदस्ति ॥५५॥ मित्रं कलत्रमितरः परिवारलोको भोगैकसाधनमिमाः किल सम्पदो नः । एकः क्षणः स तु भविष्यति यत्र भूयो नायं

न यूयमितरे न वयं न चैते ॥ ५६ ॥ व्याघ्रीव तिष्ठति जरा परितर्जयन्ती रोगाश्च शत्रव इव प्रहरन्ति देहम् । आयुः परिस्रवति भिन्नघटादिवाम्भो लोकस्तथाप्यहितमाचरतीति चित्रम् ॥५७॥ पातालमाविशसि यासि नभो विलंघ्य दिङ्मण्डलं भ्रमसि मानस चापलेन । भ्रान्त्वाऽपि देशमपरं हि तदात्मनीनं न ब्रह्म संस्मरसि निर्वृत्तिमेषि येन ॥ ५८ ॥ यां चिन्तयामि सततं मयि सा विरक्ता साऽप्यन्यमिच्छति जनं स जनोऽन्यसक्तः । अस्मत्कृते च परितुष्यति काचिदन्या धिक्ताश्च तश्च मदनश्च इमाश्च माश्च ॥ ५९ ॥ केचिद्वदन्ति धनहीनजनो जघन्यः केचिद्वदन्ति गुणहीनजनो जघन्यः । व्यासो वदत्यखिलवेदविशेषविज्ञो नारायणस्मरणहीनजनो जघन्यः ॥६०॥ रोगा हरन्ति सततं प्रबलाः शरीरं कामादयोऽप्यनुदिनं प्रदहन्ति चित्तम् । मृत्युश्च नृत्यति सदा कलयन्दिनानि तस्मात्त्वमद्य शरणं मम दीनबन्धो ॥६१॥ देहो विनश्यति सदा परीणामशीलश्चितश्च खिद्यति सदा विषयानुरागि । बुद्धिः सदा हि रमते विषयेषु नान्तस्तस्मात्त्वमद्य० ॥ ६२ ॥ आयुर्विनश्यति यथाऽऽमघटस्थतोयं विद्युत्प्रभेव चपला बत यौवनश्रीः । वृद्धा प्रधावति यथा मृगराजपत्नी तस्मात्० ॥६३॥ सत्सङ्गतीह विदिता तव भक्तिहेतुः साऽप्यद्य नास्ति बत पण्डितमानिनो मे । तामन्तरेण न हि सा क्व च बोधवार्ता तस्मात्० ॥६४॥ दृष्टिर्न भूतविषया समताऽभि-

धाना वैषम्यमेव तादियं विषयीकरोति । शान्तिः कुतो मम भवेत्समता न चेत्स्यात्तस्मात्० ॥ ६५ ॥ मैत्री समेषु न च ममास्ति कदाऽपि नाथ दीने तथा न करुणा मुदिता च पुण्ये । पापेऽनुपेक्षणवतो मम मुत्कथं स्यात्तस्मात्० ॥६६॥ नेत्रादिकं मम बहिर्विषयेषु सक्तं नान्तर्मुखं भवति तान्प्रविहाय तस्य । क्वान्तर्मुखत्वमपहाय सुखस्य वार्ता तस्मात्० ।६७। ज्ञानं यथा मम भवेत्कृपया गुरूणां सेवां तथा न विधिनाऽकरवं हि तेषाम् । सेवाऽपि साधनतया विदिताऽस्ति वित्तेस्तस्मात्त्वमद्य शरणं मम दीनबन्धो ॥ ६८ ॥ धर्मात्मजेन चरणाविह वन्दितौ मे भीमेन सार्धमिह संकथिताः कथाश्च । अत्रार्जुनश्च यमजौ च सहानुयातौ स्थानानि तानि खलु सन्ति न ते मनुष्याः ॥ ६९ ॥ अहमिह कृतविद्यो वेदिता सत्कलानां धनपतिरहमेको रूपलावण्ययुक्तः । इतिकृतगुणगर्वः खिद्यते किं जनोऽयं कतिपयदिनमध्ये सर्वमेतन्न किञ्चित् ॥७०॥ विसमलमशनाय स्वादु पानाय तोयं शयनमवनिपृष्ठे वल्कले वाससी च । नवधनमधुपानभ्रान्तसर्वेन्द्रियाणामविनयमनुमन्तुं नोत्सहे दुर्जनानाम् ॥ ७१ ॥ वयमिह परितुष्टा वल्कलैस्त्वञ्च लक्ष्म्या सम इह परितोषो निर्विशेषो विशेषः । स तु भवति दरिद्रो यस्य तृष्णा विशाला मनसि च परितुष्टे कोऽर्थवान्को दरिद्रः ॥७२॥ अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा मणौ वा लोष्टे वा कुसुमश-

यने वा दृषदि वा । तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः क्वचित्पुण्यारण्ये शिव शिव शिवेति प्रलपतः ॥७३॥ श्रियो दोलालोला विषयजरसाः प्रान्तविरसा विपद्गेहं देहं महदपि धनं भूरिनिधनम् । बृहच्छोको लोकः सततमबला दुःखबहुलास्तथाऽप्यस्मिन्घोरे पथि बत रता हन्त कुधियः ॥ ७४ ॥ वयं येभ्यो जाताश्चिरतरगता एव खलु ते समं यैः संवृद्धाः स्मरणपदवीं तेऽपि गमिताः । इदानीमेते स्मः प्रतिदिवसमासन्नपतना गतास्तुल्यावस्थां सिकातिलनदीतीरतरुभिः ॥ ७५ ॥ अमीषां जन्तूनां कतिपयनिमेषस्थितिजुषां वियोगे धीराणां क इह परितापस्य विषयः । क्षणादुत्पद्यंते विलयमपि यान्ति क्षणममी न केऽपि स्थातारः सुरगिरिपयोधिप्रभृतयः ॥ ७६ ॥ पुरा विद्वत्ताऽऽसीदुपशमवतां क्लेशहतये गता कालेनासौ विषयसुखसिद्ध्यै विषयिणाम् । इदानीन्तु प्रेक्ष्य क्षितितलभुजः शास्त्रविमुखानहो कष्टं सापि प्रतिदिनमधोऽधः प्रविशति ॥७७॥ अवश्यं यातारश्चिरतरमुषित्वाऽपि विषया वियोगे को भेदस्त्यजति न जनो यत्स्वयममून् । व्रजन्तः स्वातन्त्र्यादतुलपरितापाय मनसः स्वयं त्यक्तास्त्वेते शमसुखमनन्तं विदधति ॥ ७८ ॥ अतिक्रान्तः कालो ललितललनाभोगसुखदो भ्रमन्तः श्रान्ताः स्मः सुचिरमिह संसारसरणौ । इदानीं स्वः सिन्धोस्तटभुवि समाक्रन्दनगिरः सुतारैः फूत्कारैः शिव शिव शिवेति प्रतनुमः

॥७९॥ महाशय्या भूमिर्मसृणमुपधानं भुजलता वितानश्चाकाशं व्यजनमनुकूलोऽयमनिलः । स्फुरद्दीपश्चन्द्रः स्वधृतिवनितासङ्गमुदितः सुखं शान्तः शेते विगतभवभीतिर्नृप इव ॥८०॥ अजानन्दाहार्तिं पतति शलभस्तीव्रदहने न मीनोऽपि ज्ञात्वा वडिशयुतमश्नाति पिशितम् । विजानन्तोऽप्येते वयमिह विपज्जालजटिलान्न मुञ्चामः कामानहह गहनो मोहमहिमा ॥ ८१ ॥ क्वचिद्भूमौ शय्या क्वचिदपि च पर्यङ्कशयनं क्वचिच्छाकाहारी क्वचिदपि च शाल्योदनरुचिः । क्वचित्कन्थाधारी क्वचिदपि च दिव्याम्बरधरो मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम् ॥ ८२ ॥ गात्रं संकुचितं गतिर्विगलिता भ्रष्टा च दन्तावलिर्दृष्टिर्नश्यति वर्धते बधिरता वक्त्रं च लालायते । वाक्यं नाद्रियते च बान्धवजनो भार्या न शुश्रूषते हा कष्टं पुरुषस्य जीर्णवयसः पुत्रोऽप्यमित्रायते ॥८३॥ बीभत्सा विषया जुगुप्सिततमः कायो वयो गत्वरं प्रायो बन्धुभिरध्वनीव पथिकैर्योगो वियोगावहः । हातव्योऽयमसार एष विरसः संसार इत्यादिकं सर्वस्यैव हि वाचि चेतसि पुनः कस्यापि पुण्यात्मनः ॥८४॥ त्वं राजा वयमप्युपासितगुरुप्रज्ञाऽभिमानोन्नताः ख्यातस्त्वं विभवैर्यशांसि कवयो दिक्षु प्रतन्वन्ति नः । इत्थं मानद नातिदूरमुभयोरप्यावयोरन्तरं यद्यस्मासु पराङ्मुखोऽसि वयमप्येकान्ततो निःस्पृहाः ॥८५॥ चाण्डालः किमयं द्विजातिरथवा शूद्रोऽथ किं

तापसः किं वा तत्त्वनिवेशपेशलमतिर्योगीश्वरः कोऽपि किम्। इत्युत्पन्नविकल्पजल्पमुखरैः सम्भाष्यमाणा जनैर्न क्रुद्धाः पथि नैव तुष्टमनसो यान्ति स्वयं योगिनः ॥८६॥ नास्माकं शिविका न चास्ति कटकाद्यालंक्रियासत्क्रिया नोतुङ्गस्तुरगो न कश्चिदनुगो नाप्यम्बरं सुन्दरम् । किन्तु क्ष्मातलवर्त्यशेषविदुषां ब्रह्मात्मविद्याजुषां चेतस्तोषकरी शिरोनतिकरी विद्याऽनवद्याऽस्ति नः ॥ ८७ ॥ आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं तस्यार्धस्य परस्य चार्धमपरं बालत्ववृद्धत्वयोः । शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते जीवे वारितरङ्गबुदबुदसमे सौख्यं कुतः प्राणिनाम् ॥८८॥ रम्यं हर्म्यतलं न किं वसतये श्राव्यं न गेयादिकं किं वा प्राणसमासमागमसुखं नैवाधिकं प्रीतये । किन्तूद्भ्रान्तपतत्पतङ्गपवनव्यालोलदीपांकुरच्छायाचञ्चलमाकलय्य सकलं सन्तो वनान्तं गताः ॥ ८९ ॥ भोगा मेघवितानमध्यविलसत्सौदामिनीचञ्चला आयुर्वायुविघट्टिताभ्रपटलीलीनाम्बुवद्भङ्गुरम्। लोला यौवनलालसा तनुभृतामित्याकलय्य द्रुतं योगे धैर्यसमाधिसिद्धिसुलभे बुद्धिं विदध्वं बुधाः ॥ ९० ॥ आयूंषि क्षणिकानि यौवनमपि प्रायो जराऽध्यासितं संयोगा विरहावसानविरसा भोगाः क्षणध्वंसिनः । जानन्तोऽपि यथाव्यवस्थितमिदं लोकाः समस्तं जगच्चित्रं यद्गुरुगर्वभावितधियः क्रुध्यन्ति माद्यन्ति च॥९१॥ रात्रिः सैव पुनः स एव दिवसो मत्वाऽबुधा

जन्तवो धावन्त्युद्यमिनस्तथैव निभृतप्रारब्धतत्तत्क्रियाः। व्यापारैः पुनरुक्तभुक्तविषयैरेवंविधेनामुना संसारेण कदर्थिताः कथमहो मोहान्न लज्जामहे ॥९२॥ ब्रह्मज्ञानविवेकिनोऽमलधियः कुर्वन्त्यहो दुष्करं यन्मुञ्चन्त्युपभोगवन्त्यपि धनान्येकान्ततो निःस्पृहाः। न प्राप्तानि पुरा न संप्रति न च प्राप्तौ दृढप्रत्ययो वाञ्छामात्रपरिग्रहाण्यपि परित्यक्तुं न शक्ता वयम् ॥९३॥ आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला रागग्राहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी। मोहावर्तसुदुस्तराऽतिगहना प्रोतुङ्गचिन्तातटी तस्याः पारगता विशुद्धमनसो नन्दन्ति योगीश्वराः ॥९४॥ आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं व्यापारैर्बहुकार्यभारगुरुभिः कालो न विज्ञायते। दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ॥९५॥ भोगे रोगभयं कुले च्युतिभयं वित्ते नृपालाद्भयं मौने दैन्यभयं बले रिपुभयं रूपे जराया भयम्। शास्त्रे वादभयं गुणे खलभयं काये कृतान्ताद्भयं सर्वं वस्तु भयान्वितं भुवि नृणां वैराग्यमेवाभयम् ॥ ९६ ॥ याच्ञाशून्यमयत्नलभ्यमशनं धात्रा मरुत्कल्पितं व्यालानां पशवस्तृणाङ्कुरभुजः सृष्टाः स्थलीशायिनः। संसारार्णवलंघनक्षमधियां वृत्तिः कृता सा नृणां यामन्वेषयतां प्रयान्ति सततं सर्वे समाप्तिं गुणाः ॥९७॥ धैर्यं यस्य पिता क्षमा च जननी शान्तिश्चिरं गेहिनी सत्यं सूनुरयं दया च

भगिनी भ्राता मनःसंयमः । शय्या भूमितलं दिशोऽपि वसनं ज्ञानामृतं भोजनमेते यस्य कुटुम्बिनो वद सखे कस्माद्भयं योगिनः ॥९८॥ यावत्स्वस्थमिदं शरीरमरुजं यावज्जरा दूरतो यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः । आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान् सन्दीप्ते भुवने तु कूपखननं प्रत्युद्यमः कीदृशः ॥९९॥ अर्थानामीशिषे त्वं वयमपि च गिरामीश्महे यावदित्थं शूरस्त्वं वादिदर्पज्वरशमनविधावक्षयं पाटवं नः । सेवन्ते त्वां धनाढ्या मतिमलहतये मामपि श्रोतुकामा मय्यप्यास्था न चेत्तत्त्वयि मम सुतरामेष राजन्गतोऽस्मि ॥१००॥ अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता । गोभाज इत् किलासथ यत्सनवथ पूरुषम् ॥१०१॥

## परसेवा ४४ ॥

सेवया धनमिच्छद्भिः सेवकैः पश्य किं कृतम् । यत्स्वातन्त्र्यं शरीरस्य मूढैस्तदपि हारितम् ॥१॥ मौनान्मूको भाषणाच्च धूर्तो वा जल्पकस्तथा । पार्श्ववर्ती च धृष्टः स्यादप्रगल्भश्च दूरतः ॥ २ ॥ क्षान्त्या भीरुः कोपयुक्तो मूर्खः सेवक उच्यते । रूपवांश्च भवेज्जारः सेवाधर्मोऽतिदुर्गमः ॥ ३ ॥ सेवा श्ववृत्तिर्यैरुक्ता न तैः सम्यगुदाहृतम् । स्वच्छन्दचारी कुत्र श्वा विक्रीतासुः क्व सेवकः ॥ ४ ॥ भूशय्या ब्रह्मचर्यं च कृशत्वं लघुभोजनम् । सेवकस्य यतेर्यद्वाद्विशेषः पापधर्मजः ॥ ५ ॥ वरं वनं वरं भैक्ष्यं वरं भारोपजीवनम् । पुंसां विवेकही-

नानां सेवया न धनार्जनम् ॥ ६ ॥ स्वाभिप्रायपरोक्षस्य परचित्तानुवर्तिनः । स्वयं विक्रीतदेहस्य सेवकस्य कुतः सुखम् ॥७॥ मृदुनाऽतिसुवृत्तेन सुमृष्टेनातिहारिणा । मोदकेनापि किं तेन निष्पत्तिर्यस्य सेवया ॥८॥ पञ्चभिर्याति दासत्वं पुराणैः कोऽपि मानवः । कोऽपि लक्षैः कृती कोऽपि लक्षैरपि न लभ्यते ॥९॥ जीवन्तोऽपि मृताः पञ्च व्यासेन परिकीर्तिताः । दरिद्रो व्याधितो मूर्खः प्रवासी नीचसेवकः ॥१०॥ चलेषु स्वामिचित्तेषु सुलभे पिशुने जने । यदि जीवन्त्यहो चित्रं क्षणमप्युपजीविनः ॥११॥ नाश्नाति सेवयौत्सुक्यादनिद्रो न प्रबुध्यते । न निःशङ्कं वचो ब्रूते सेवकोऽप्यत्र जीवति ॥ १२ ॥ या प्रकृत्यैव चपला निपतत्यशुचावपि । स्वामिनो बहु मन्यन्ते दृष्टिं तामपि सेवकाः ॥ १३ ॥ मनुष्यजातौ तुल्यायां भृत्यत्वमतिगर्हितम् । प्रथमो यो न तत्रापि स किं जीवत्सु गण्यते ॥ १४ ॥ शीतातपादिकष्टानि सहते यानि सेवकः । धनाय तानि चाल्पानि यदि धर्माय मुच्यते ॥१५॥ एतद्धि जन्मसाफल्यं यदनायत्तवृत्तिता । ये पराधीनतां यातास्ते वै जीवन्ति के मृताः ॥ १६ ॥ स्वयं जहाति सेवकः सुखं च मानमेव च । यदर्थमर्थमीहते तदेव तस्य हीयते ॥ १७ ॥ प्रणमत्युन्नतिहेतोर्जीवनहेतोर्विमुञ्चाति प्रणान् । दुःखीयति सुखहेतोः को मूर्खः सेवकादन्यः ॥१८॥ विज्ञैः स्निग्धैरुपकृतमपि द्वेषतामेति कश्चित् साक्षादन्यैरपकृतमपि प्रीतिमेवोपयाति । चित्रं

चित्रं किमथ चरितं नैकभावाश्रयाणां सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ १९ ॥ आहारे वडवानलश्च शयने यः कुम्भकर्णायते संदेशे बधिरः पलायनविधौ सिंहः शृगालो रणे । अन्धो वस्तुनिरीक्षणेऽथ गमने खञ्जः पटुः क्रन्दने भाग्येनैव हि लभ्यते पुनरसौ सर्वोत्तमः सेवकः ॥२०॥

## राजधर्माः ४५ ॥

अराजके हि लोकेऽस्मिन् सर्वतो विद्रुते भयात् । रक्षार्थमस्य सर्वस्य राजानमसृजत्प्रभुः ॥१॥ राजा बन्धुरबन्धूनां राजा चक्षुरचक्षुषाम् । राजा पिता च माता च सर्वेषां न्यायवर्तिनाम् ॥२॥ बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः । महती देवता ह्येषा नररूपेण तिष्ठति ॥ ३ ॥ हृष्टोऽपि राजा यद्द्यान्न तत्तुष्टो वणिग्जनः । अतो भूमिपतिः सेव्यस्त्याज्यो दूरतरेण सः ॥४॥ पात्रे त्यागी गुणे रागी भोगी परिजनैः सह । भावबोद्धा रणे योद्धा प्रभुः पञ्चगुणो भवेत् ॥ ५ ॥ निग्रहेण हि पापानां साधूनां संग्रहेण च । द्विजातय इवेज्याभिः पूयन्ते सततं नृपाः ॥ ६ ॥ किं तस्य तपसा राज्ञः किं च तस्याध्वरैरपि । सुपालितप्रजो यः स्यात्सर्वधर्मविदेव सः ॥ ७ ॥ सुवर्णैः पट्टचेलैश्च शोभा स्याद्दारयोषिताम् । पराक्रमेण दानेन राजन्ते राजनन्दनाः ॥ ८ ॥ तस्करेभ्यो नियुक्तेभ्यः शत्रुभ्यो नृपवल्लभात् । नृपतिर्निजलोभाच्च प्रजा रक्षेत्पितेव हि ॥९॥ पुष्पं पुष्पं विचिन्वीत मूलच्छेदं न कारयेत् । माला-

कार इवारामे न यथाऽङ्गारकारकः ॥ १० ॥ यथा बीजांकुरः सूक्ष्मः प्रयत्नेनाभिरक्षितः । फलप्रदो भवेत्काले तद्वल्लोकाः सुरक्षिताः ॥११॥ राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः । राजानमनुवर्तन्ते यथा राजा तथा प्रजाः ॥ १२ ॥ अर्थानामीश्वरो यः स्यादिन्द्रियाणामनीश्वरः । इन्द्रियाणामनैश्वर्यादैश्वर्याद् भ्रश्यते नरः ॥१३॥ मृगयाऽक्षास्तथा पानं गर्हितानि महीभुजाम् । दृष्टास्तेभ्यस्तु विपदः पाण्डुनैषधवृष्णीषु ॥१४॥ पृष्टो ब्रूते न सत्यं यः परिणामे सुखावहम् । मन्त्री चेत्प्रियवक्ता स्यात्केवलं स रिपुः स्मृतः ॥१५॥ अप्रियाण्यपि पथ्यानि ये वदन्ति नृणामिह । त एव सुहृदः प्रोक्ता अन्ये स्युर्नामधारकाः ॥१६॥ अप्रियस्यापि पथ्यस्य परिणामः सुखावहः । वक्ता श्रोता च यत्रास्ति रमन्ते तत्र सम्पदः ॥ १७ ॥ सुलभाः पुरुषा राजन्सततं प्रियवादिनः । अप्रियस्य तु पथ्यस्य वक्ताश्रोता च दुर्लभः ॥ १८ ॥ यो हि धर्मं समाश्रित्य हित्वा भर्तुः प्रियाप्रिये । अप्रियाण्याह पथ्यानि तेन राजा सहायवान् ॥१९॥ यः कृत्वा सुकृतं राज्ञो दुष्करं हितमुत्तमम् । लज्जया वक्ति नो किञ्चित्तेन राजा सहायवान् ॥ २० ॥ प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः । न तं राजानमिच्छन्ति षण्ढं पतिमिवाङ्गनाः ॥२१॥ काचे मणिर्मणौ काचो येषां बुद्धिः प्रवर्तते । न तेषां सन्निधौ भृत्यो नाममात्रोऽपि तिष्ठति ॥ २२ ॥ अविद्वानपि भूपालो विद्यावृद्धो-

पसेवया। परां श्रियमवाप्नोति जलासन्नतरुर्यथा ॥ २३ ॥ न तच्छस्त्रैर्न नागेन्द्रैर्न हयैर्न च पत्तिभिः। कार्यं संसिद्धिमभ्येति यथा बुद्ध्या प्रसाधितम् ॥२४॥ एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता। बुद्धिर्बुद्धिमता युक्ता हन्ति राष्ट्रं सनायकम् ॥२५॥ सत्यं शौर्यं दया त्यागो नृपस्यैते महागुणाः। एभिर्मुक्तो महीपालः प्राप्नोति खलु वाच्यताम् ॥२६॥ वश्येन्द्रियं जितात्मानं धृतदण्डं विकारिषु। परीक्ष्यकारिणं धीरमत्यर्थं श्रीर्निषेवते ॥२७॥ तस्मान्नैव मृदुर्नित्यं तीक्ष्णो नैव भवेन्नृपः। वासन्तार्क इव श्रीमान्न शीतो न च घर्मदः ॥२८॥ सम्यग्दण्डधरो नित्यं राजा धर्ममवाप्नुयात्। नृपस्य सततं दण्डः सम्यग्धर्मः प्रशस्यते ॥ २९ ॥ दण्डः शास्ति प्रजाः सर्वाः दण्ड एवाभिरक्षति। दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥ ३० ॥ समीक्ष्य स धृतः सम्यक् सर्वा रञ्जयति प्रजाः। असमीक्ष्य प्रणीतस्तु विनाशयति सर्वतः ॥ ३१ ॥ राजदण्डभयादेके पापाः पापं न कुर्वते। यमदण्डभयादेके परलोकभयादपि ॥ ३२ ॥ परस्परभयादेके पापाः पापं न कुर्वते। एवं सांसिद्धिके लोके सर्वं दण्डे प्रतिष्ठितम् ॥ ३३ ॥ ब्राह्मणानां यथा धर्मो दानमध्ययनं तपः। क्षत्रियाणां तथा कृष्ण समरे देहपातनम् ॥३४॥ अधर्मः क्षत्रियस्यैष यच्छय्यामरणं भवेत्। विसृजन् श्लेष्ममूत्राणि कृपणं परिदेवयन् ॥३५॥ अधर्मः क्षत्रियस्यैष यद्व्याधिमरणं गृहे।

यद्योनिधनं याति सोऽस्य धर्मः सनातनः ॥३६॥ अविक्षतेन देहेन प्रलयं योऽधिगच्छति। क्षत्रियो नास्य तत्कर्म प्रशंसन्ति पुराविदः ।३७। परमं यत्नमातिष्ठेत्स्तेनानां निग्रहे नृपः। स्तेनानां निग्रहादस्य यशो राष्ट्रञ्च वर्धते ॥ ३८ ॥ इदमेव नरेन्द्राणां स्वर्गद्वारमनर्गलम् । यदात्मनः प्रतिज्ञा च प्रजा च परिपाल्यते ॥ ३९ ॥ यस्य न ज्ञायते शीलं कुलं विद्या नरस्य च। कस्तेन सह विश्वासं पुमान्कुर्याद्विचक्षणः ॥४०॥ नोपेक्षितव्यो विद्वद्भिः शत्रुरल्पोऽप्यवज्ञया । वह्निरल्पोऽपि संवृद्धः कुरुते भस्मसाद्गृहम् ॥ ४१ ॥ जातमात्रं न यः शत्रुं व्याधिञ्च प्रशमं नयेत् । अतिपुष्टाङ्गयुक्तोऽपि स पश्चात्तेन हन्यते ॥४२॥ स किं सखा साधु न शास्ति योऽधिपं हितान्न यः संशृणुते स किं प्रभुः। सदाऽनुकूलेषु हि कुर्वते स्थितिं नृपेष्वमात्येषु च सर्वसम्पदः ॥ ४३ ॥ वित्तं यदा यस्य समं विभक्तं गूढश्चरः संनिभृतश्च मन्त्रः । न चाप्रियं प्राणिषु यो ब्रवीति स सागरान्तां पृथिवीं प्रशास्ति ॥४४॥

## संकीर्णप्रकरणम् ४६ ॥

सरसाऽपि कवेर्वाणी हरिनामाङ्किता यदि। सादरं गृह्यते तज्ज्ञैः शुक्तिर्मुक्तान्विता यथा ॥ १ ॥ कल्याणी वत गाथेयं लौकिकी प्रतिभाति माम् । एति जीवितमानन्दो नरं वर्षशतादपि ॥२॥ अर्थनाशं मनस्तापं गृहे दुश्चरितानि च। वञ्चनं चापमानं च मतिमान्न प्रकाशयेत् ॥३॥ धातुवादेषु वित्ताशा

मोक्षाशा कौलिके मते। जामातरि च पुत्राशा त्रयमेतन्निरर्थकम् ॥४॥ को न याति वशं लोके मुखे पिण्डेन पूरितः। मृदङ्गो मुखलेपेन करोति मधुरध्वनिम् ॥५॥ लोकेषु निर्धनो दुःखी ऋणग्रस्तस्ततोऽधिकम्। ताभ्यां रोगयुतो दुःखी तेभ्यो दुःखी कुभार्यकः।६। दातुरुन्नतचित्तस्य गुणयुक्तस्य चार्थिनः। दुर्लभः खलु संयोगः सद्बीजक्षेत्रयोरिव ॥ ७ ॥ आरोप्यते शिला शैले यत्नेन महता यथा। निपात्यते क्षणेनाधस्तथाऽऽत्मा गुणदोषयोः ॥ ८ ॥ प्रभूतवयसः पुंसो धियः पाकः प्रवर्तते। जीर्णस्य चन्दनतरोरामोद उपजायते ॥९॥ आत्मनो मुखदोषेण बध्यन्ते शुकसारिकाः। बकास्तत्र न बध्यन्ते मौनं सर्वार्थसाधनम् ॥१०॥ अप्रियाण्यपि कुर्वाणो यः प्रियः प्रिय एव सः। दग्धमन्दिरसारेऽपि कस्य वह्नावनादरः॥ ११ ॥ मौनं कालविलम्बश्च भ्रुकुटी भूमिदर्शनम्। प्रयाणमन्यवार्त्ता च नकारः षड्विधः स्मृतः॥१२॥ दुःखितेभ्योऽपि भूतेभ्यो मृत्युरोगजरादिभिः। भूयः को दुःखमपरं सघृणो दातुमर्हति ॥ १३ ॥ दुःखं ददाति योऽन्यस्य ध्रुवं दुःखं स विन्दति। तस्मान्न कस्यचित् दुखं दातव्यं दुःखभीरुणा ॥ १४॥ चोद्यमानोऽपि पापेषु शुद्धात्मा न प्रवर्तते। वार्यमाणोऽपि पापेभ्यः पापात्मा पापमिच्छति ॥१५॥ नाद्रव्ये निहिता काचित्क्रिया फलवती भवेत्। न व्यापारशतेनापि शुकवत्पाठ्यते बकः।१६। उत्तमे निर्गुणं गोत्रे नापत्यमुपजायते। आकरे पद्मरागाणां

जन्म काचमणेः कुतः ॥१७॥ पञ्चभिः सह गन्तव्यं स्थातव्यं पञ्चभिः सह । पञ्चभिः सह वक्तव्यं न दुःखं पञ्चभिः सह ॥१८॥ उत्सवे व्यसने युद्धे दुर्भिक्षे राष्ट्रविप्लवे । राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥१९॥ कः कालः कानि मित्राणि को देशः कौ व्ययागमौ । कश्चाहं का च मे शक्तिरिति चिन्त्यं मुहुर्मुहुः ॥२०॥ एवं चिन्त्यमानस्य स्वधर्मनिरतस्य च । भवन्ति सम्पदः सर्वा गुणलुब्धाः स्वयं हिताः ॥२१॥ जितेन्द्रियः कोपहन्ता यश्चापत्सु न मुञ्चति । स शूरो धन्य इत्याहुः प्राणिहन्ता तु पापकृत् ॥२२॥ सुहृदोऽप्यरयस्तस्य यस्यात्मा दुरधिष्ठितः । अजीर्णे पथ्यमप्यन्नं व्याधये मरणाय वा ॥२३॥ उत्पन्नपश्चात्तापस्य बुद्धिर्भवति यादृशी । तादृशी यदि पूर्वं स्यात्कस्य न स्यात्फलोदयः ॥२४॥ कालस्य कारणं राजा राज्ञो वा कालकारणम् । इति ते संशयो माभूद्राजा कालस्य कारणम् ॥२५॥ एतद्देशप्रसूतस्य सकाशादग्रजन्मनः । स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥२६॥ अभिवादयेत वृद्धान्दद्याच्चैवासनं स्वयम्। कृताञ्जलिरुपासीत गच्छतः पृष्ठतोऽन्वियात् ॥२७॥ अभिवादनशीलस्य नित्यं वृद्धोपसेविनः । चत्वारि तस्य वर्धन्ते आयुर्विद्या यशो बलम् ॥२८॥ ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयाति । प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ॥२९॥ स एव धन्यो विपदि स्वरूपं यो न मुञ्चति । त्यज-

त्यर्ककरैस्तप्तं हिमं देहं न शीतताम् ॥ ३० ॥ दृष्टिपूतं न्यसे-त्पादं वस्त्रपूतं जलं पिबेत् । सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत् ॥३१॥ अवृत्तिकं त्यजेद्देशं वृत्तिं सोपद्रवां त्यजेत् । त्यजेन्मायाविनं मित्रं धनं प्राणहरं त्यजेत् ॥३२॥ नाधार्मिके वसेद् ग्रामे न व्याधिबहुले भृशम् । नैकः प्रपद्येताध्वानं न चिरं पर्वते वसेत् ॥ ३३ ॥ यस्मिन्देशे न सम्मानो न वृत्तिर्न च बान्धवाः । न च विद्यागमोऽप्यस्ति न तत्र दिवसं वसेत् ॥३४॥ धनिकः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः । पञ्च यत्र न विद्यन्ते न तत्र दिवसं वसेत् ॥३५॥ त्यजेदेकं कुल-स्यार्थे ग्रामस्यार्थे कुलं त्यजेत् । ग्रामं जनपदस्यार्थे ह्यात्मार्थे पृथिवीं त्यजेत् ॥ ३६ ॥ चलत्येकेन पादेन तिष्ठत्येकेन पण्डितः । नासमीक्ष्य परं स्थानं पूर्वमायतनं त्यजेत्॥३७॥ सर्वथा सन्त्यजेद्वादं न कञ्चिन्मर्माणि स्पृशेत् । सर्वान्परित्य-जेदर्थान्स्वाध्यायस्य विरोधिनः ॥३८॥ ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ॥ ३९ ॥ हितोपदेशं शृणुयात्कुर्वीत च यथोदितम् । विदुरोक्तमकृत्वाऽभूत्कौरवः शोकशल्यभाक् ॥४०॥ न पुत्रा-यत्तमैश्वर्यं कुर्यादार्यः कथञ्चन । पुत्रार्पितप्रभुत्वोऽभूद्धृतरा-ष्ट्रस्तृणोपमः ॥४१॥ क्षिपेद्वाक्यशरान्घोरान्न पारुष्यविषप्लु-तान् । वाक्पारुष्यरुषा चक्रे भीमः कुरुकुलक्षयम् ॥ ४२ ॥ सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः । अर्धेन कुरुते कार्यं

सर्वनाशो न जायते॥४३॥शनैः पन्थाः शनैः कन्था शनैः पर्वतमस्तके। शनैर्विद्या शनैर्वित्तं पञ्चैतानि शनैः शनैः॥४४॥ जलविन्दुनिपातेन क्रमशः पूर्यते घटः। स हेतुः सर्वविद्यानां धर्मस्य च धनस्य च॥४५॥ स्वजनैर्न विरुध्येत न स्पर्धेत बलीयसा। न कुर्यात्स्त्रीबालवृद्धमूर्खेषु च विवादनम्॥४६॥ अभियुक्तं बलवता दुर्बलं हीनसाधनम्। हृतस्वं कामिनं चोरमाविशन्ति प्रजागरः॥४७॥अपकृत्य बुद्धिमतो दूरस्थोऽस्मीति नाश्वसेत्। दीर्घौ बुद्धिमतो बाहू याभ्यां हिंसति दूरतः॥४८॥ सर्वे यत्र विनेतारः सर्वे यत्राभिमानिनः। सर्वे महत्त्वमिच्छन्ति कुलं तदवसीदति॥४९॥ यत्र सूक्तं दुरुक्तञ्च समं स्यान्मधुसूदन। न तत्र प्रलपेत्प्राज्ञो बधिरेष्विव गायनम्॥५०॥ जले तैलं खले गुह्यं पात्रे दानं मनागपि। प्राज्ञे शास्त्रं स्वयं याति विस्तारं वस्तुशक्तितः॥५१॥ सम्पत्सरस्वती सत्यं सन्तानं सदनुग्रहः। सत्ता सुकृतसम्भारः सकाराः सप्त दुर्लभाः॥५२॥ सा श्रीर्या न मदं कुर्यात्स सुखी तृष्णयोज्झितः। तन्मित्रं यत्र विश्वासः पुरुषः स जितेन्द्रियः॥५३॥ अव्यवस्थितचित्तस्य न जने न वने सुखम्। जने क्लिश्नाति सङ्गेन वने सङ्गविवर्जितः॥५४॥ क्वचिद्रुष्टः क्वचित्तुष्टो रुष्टस्तुष्टः क्षणे क्षणे। अव्यवस्थितचित्तस्य प्रसादोऽपि भयङ्करः॥५५॥ यस्मिन् रुष्टे भयं नास्ति तुष्टे नैव धनागमः। निग्रहानुग्रहौ न स्तः स रुष्टः किं करिष्यति॥५६॥ व्याख्यानान्ते रमशा-

नान्ते भोजनान्ते च या मतिः । सा मतिः सर्वदा चेत्स्यात्को न मुच्येत बन्धनात् ॥ ५७ ॥ पण्डितैः सह साङ्गत्यं पण्डितैः सह संकथाः । पण्डितैः सह मित्रत्वं कुर्वाणो नावसीदति॥५८॥ धनधान्यप्रयोगेषु विद्यासंग्रहणेषु च । आहारे व्यवहारे च त्यक्तलज्जः सुखी भवेत् ॥५९॥ यौवनं धनसम्पत्तिः प्रभुत्वमविवेकिता । एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ॥६०॥ न पश्यति च जन्मान्धः कामान्धो नैव पश्यति । न पश्यति मदोन्मत्तो ह्यर्थी दोषं न पश्यति ॥ ६१ ॥ नास्ति कामसमो व्याधिर्नास्ति मोहसमो रिपुः । नास्ति क्रोधसमो वह्निर्नास्ति ज्ञानात्परं सुखम् ॥६२॥ हस्तस्य भूषणं दानं सत्यं कण्ठस्य भूषणम् । श्रोत्रस्य भूषणं शास्त्रं भूषणे किं प्रयोजनं ॥६३॥ लालने बहवो दोषास्ताडने बहवो गुणाः । तस्मात्पुत्रञ्च शिष्यञ्च ताडयेन्न तु लालयेत् ॥६४॥ लालयेत्पञ्च वर्षाणि दश वर्षाणि ताडयेत् । प्राप्ते षोडशके वर्षे पुत्रं मित्रवदाचरेत् ॥६५॥ आदानस्य प्रदानस्य कर्तव्यस्य च कर्मणः । क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम् ॥ ६६ ॥ अनारोग्यमनायुष्यमस्वर्ग्यञ्चातिभोजनम् । अपुण्यं लोकविद्विष्टं तस्मात्तत्परिवर्जयेत् ॥६७॥ श्रोतव्यं हितकामानां सुहृदां हितमिच्छताम् । अकर्तव्यो हि निर्बन्धो निर्बन्धश्च क्षयोदयः॥६८॥ व्याकुलोऽपि विपत्पातैः स्मरेद्विष्णुं सदा हृदि । शरतल्पगतो भीष्मः सस्मार परमेश्वरम् ॥६९॥ सौहृदेन परित्यक्तं निःस्नेहं

खलवत्त्यजेत् । सोदरं भ्रातरमपि किमुतान्यं पृथग्जनम्॥७०॥ सतां मतमतिक्रम्य योऽसतां वर्तते मते । शोचन्ते व्यसने तस्य सुहृदो न चिरादिव ॥ ७१ ॥ सर्वः सर्वं न जानाति सर्वज्ञो नास्ति कश्चन । नैकत्र परिनिष्ठास्ति ज्ञानस्य पुरुषे क्वचिद् ॥७२॥ आत्मोत्कर्षं न मार्गेत परेषां परिनिन्दया । विपश्चिद्गुणसम्पन्नः प्राप्नोत्येव महद्यशः ॥७३॥ विश्वासप्रतिपन्नानां वञ्चने का विदग्धता । अङ्कमारुह्यसुप्तानां हन्तुः किन्नाम पौरुषम्॥७४॥यदपथ्यवतामायुर्यदनीतिमतां श्रियः । तदेतत्काकतालीयं तदेतच्च घुणाक्षरम् ॥ ७५ ॥ दूरस्थोऽपि समीपस्थो यो यस्य हृदि वर्तते । यो यस्य हृदये नास्ति समीपस्थोऽपि दूरगः ।७६। मनः शौचं कर्मशौचं कुलशौचं च भारत । शरीरशौचं वाक्शौचं शौचं पञ्चविधं स्मृतम् ॥७७॥ सर्वेषामेव शौचानामर्थशौचं परं स्मृतम् । योऽर्थे शुचिः स हि शुचिर्न मृद्वारिशुचिः शुचिः॥७८॥अद्भिर्गात्राणि शुद्ध्यन्ति मनः सत्येन शुद्ध्यति । विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुद्ध्यति॥७९॥ नापृष्टः कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः । जानन्नपि हि मेधावी जडवल्लोकमाचरेत् ॥८०॥ आपद्युन्मार्गगमने कार्यकालात्ययेषु च । कल्याणवचनं ब्रूयादपृष्टोऽपि हितो नरः ॥८१॥ पित्रोर्नित्यं प्रियं कुर्यादाचार्यस्य च सर्वदा । तेषु हि त्रिषु तुष्टेषु तपः सर्वं समाप्यते ॥८२॥ मनसैव कृतं राम न शरीरकृतं कृतम् । येनैवालिङ्गिता कान्ता तेनैवालि-

ङ्गिता सुता ॥ ८३ ॥ मक्षिका व्रणमिच्छन्ति धनमिच्छन्ति पार्थिवाः। नीचाः कलहमिच्छन्ति शान्तिमिच्छन्ति साधवः ॥ ८४ ॥ असम्भवगुणस्तुत्या जायते स्वात्मनस्त्रपा। कार्णिकारं सुगन्धीति वदन्को नोपहस्यते ॥ ८५॥ रोगशोकपरीतापबन्धनव्यसनानि च । आत्माऽपराधवृक्षाणां फलान्येतानि देहिनाम् ॥८६॥ पवित्रं वृष्यमायुष्यं श्रमस्वेदमलापहम्। शरीरबलसन्धानं स्नानमोजस्करं परम् ॥८७॥ लाघवं कर्मसामर्थ्यं स्थैर्यं क्लेशसहिष्णुता। दोषक्षयोऽग्निवृद्धिश्च व्यायामादुपजायते ॥ ८८ ॥ जनिता चोपनेता च यश्च विद्यां प्रयच्छति । अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः ॥८९॥ राजपत्नी गुरोःपत्नी मित्रपत्नी तथैव च। पत्नीमाता स्वमाता च पञ्चैता मातरः स्मृताः ॥९०॥ न स्त्रीजितः प्रमूढः स्याद्गाढरागवशीकृतः। पुत्रशोकाद्दशरथो जीवं जायाजितोऽत्यजत् ॥९१॥ युक्तियुक्तमुपादेयं वचनं बालकादपि । अन्यत्तृणमिवत्याज्यमप्युक्तं परमेष्ठिना ॥ ९२ ॥ बुद्धिर्यस्य बलं तस्य निर्बुद्धेस्तु कुतो बलम् । वने सिंहो मदोन्मत्तः शशकेन निपातितः ॥९३॥ अर्थिप्रश्नकृतौ लोके सुलभौ तौ गृहे गृहे । दाता चोत्तरदश्चैव दुर्लभौ पुरुषौ भुवि ॥ ९४ ॥ तीव्रे तपसि लीनानामिन्द्रियाणां न विश्वसेत् । विश्वामित्रोऽपि सोत्कण्ठः कण्ठे जग्राह मेनकाम् ॥९५॥ अपूज्या यत्र पूज्यन्ते पूज्यानान्तु विमानना । त्रीणि तत्र प्रवर्तन्ते दुर्भिक्षं मरणं भयम्

॥९६॥ हिताशी स्यान्मिताशी स्यात्कालभोजी जितेन्द्रियः। पश्यन् रोगान्बहून् कष्टान् बुद्धिमान्विषमाशनात् ॥ ९७ ॥ पुण्यस्य फलमिच्छन्ति पुण्यं नेच्छन्ति मानवाः । न पापफलमिच्छन्ति पापं कुर्वन्ति यत्नतः ॥ ९८ ॥ सत्यं तीर्थं क्षमा तीर्थं तीर्थमिन्द्रियनिग्रहः । सर्वभूतदया तीर्थं सर्वत्रार्जवमेव च ॥ ९९ ॥ ज्ञानं तीर्थं धृतिस्तीर्थं पुण्यं तीर्थमुदाहृतम् । तीर्थानामपि तत्तीर्थं विशुद्धिर्मनसः परा ॥१००॥ उपदेशक्रमो राम व्यवस्थामात्रपालनम् । ज्ञप्तेस्तु कारणं शुद्धा शिष्यप्रज्ञैव केवला ॥ १०१ ॥ अनारम्भो हि कार्याणां प्रथमं बुद्धिलक्षणम् । प्रारब्धस्यान्तगमनं द्वितीयं बुद्धिलक्षणम् ॥ १०२ ॥ दुष्टा भार्या शठं मित्रं भृत्यश्चोत्तरदायकः । ससर्पे च गृहे वासो मृत्युरेव न संशयः ॥ १०३ ॥ अहो साहजिकं प्रेम दूरादपि विराजते । चकोरनयनद्वन्द्वमाह्लादयति चन्द्रमाः ॥१०४॥ सख्योः सोदर्ययोर्भ्रात्रोर्दम्पत्योर्वा परस्परम् । कस्यचिन्नाभिजानामि प्रीतिं निष्कारणामिह ॥१०५॥ पुत्रं हि मातापितरौ त्यजतः पतितं प्रियम् । लोको रक्षति चात्मानं पश्य स्वार्थस्य सारताम् ॥१०६॥ न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् । विश्वासाद्भयमुत्पन्नमपि मूलानि कृन्तति ॥ १०७॥ कृतवैरे न विश्वासः कार्यस्त्विह सुहृद्यपि । छन्नं सन्तिष्ठते वैरं गूढोऽग्निरिव दारुषु ॥१०८॥ संक्षेपो नीतिशास्त्राणामविश्वासः परो मतः । नृषु

तस्मादविश्वासः पुष्कलं हितमात्मनः ॥१०९॥ यथा सुनि-
पुणः सम्यक् परदोषेक्षणे रतः । तथा चेन्निपुणः स्वेषु को
न मुच्येत बन्धनात् ॥११०॥ परोऽपि हितवान्बन्धुर्बन्धुर-
प्यहितः परः । अहितो देहजो व्याधिर्हितमारण्यमोषधम्॥१११॥
तज्ज्ञानं स च शास्त्रार्थस्तद्वैदग्ध्यमनिन्दितम् । सच्छिष्याय
विरक्ताय साधो यदुपदिश्यते ॥ ११२ ॥ तैलाद्रक्षेज्जलाद्रक्षे-
द्रक्षेच्छिथिलबन्धनात् । मूर्खहस्ते न दातव्यमेवं वदति पुस्त-
कम् ॥११३॥ उष्ट्राणाञ्च विवाहेषु गीतं गायन्ति गर्दभाः ।
प्रशंसन्ति परस्परमहो रूपमहो ध्वनिः ॥११४॥ निरर्थकं पदं
नास्ति नास्ति मूलमनोषधम् । अयोग्यः पुरुषो नास्ति योज-
कस्तत्र दुर्लभः ॥११५॥ शरीरं धर्मसर्वस्वं रक्षणीयं प्रयत्नतः ।
शरीरात्स्रूयते धर्मः पर्वतात्सलिलं यथा ॥ ११६ ॥ धर्मार्थ-
काममोक्षाणां प्राणाः संस्थितिहेतवः । तान्निघ्नता किन्न हतं
रक्षता किन्न रक्षितम् ॥११७॥ अनिष्टादिष्टलाभेपि न गति-
र्जायते शुभा । यत्रास्ते विषसंसर्गोऽमृतं तदपि मृत्यवे ॥११८॥
किं करोमि क्व गच्छामि को वेदानुद्धरिष्यति । मा रुदिहि
वरारोहे भट्टाचार्योऽस्मि भूतले ॥ ११९ ॥ मूर्खा यत्र न
पूज्यन्ते धान्यं यत्र सुसंचितम् । दाम्पत्यकलहो नास्ति तत्र
श्रीः स्वयमागता ॥१२०॥ धर्मात्प्रच्युतशीलं हि पुरुषं पाप-
निश्चयम् । त्यक्त्वा सुखमवाप्नोति हस्तादाशीविषं यथा
॥१२१॥ मरणान्तानि वैराणि निवृत्तं नः प्रयोजनम् । क्रिय-

तामस्य संस्कारो ममाप्येष यथा तव ॥१२२॥ न वै राज्यं न राजाऽऽसीन्न दण्डो न च दाण्डिकः। धर्मेणैव प्रजाः सर्वा रक्षन्ति स्म परस्परम् ॥१२३॥ दानं यज्ञः सतां पूजा वेद-धारणमार्जवम्। एष धर्मः परो राजन्बलवान् प्रेत्य चेह च ॥१२४॥ बन्धनानि खलु सन्ति बहूनि प्रेमरज्जुकृतबन्धन-मन्यत्। दारुभेदनिपुणोऽपि षडंघ्रिः पङ्कजे भवति कोषनि-बद्धः ॥१२५॥ काव्यं करोमि नहि चारुतरं करोमि यत्ना-त्करोमि यदि चारुतरं करोमि। भूपालमौलिमणिमण्डितपा-दपीठ हे साहसाङ्क कवयामि वयामि यामि ॥१२६॥ सौमित्रि-र्वदति विभीषणाय लङ्कां देहि त्वं भुवनपते विनैव कोषम्। एतस्मिन् रघुपतिराह वाक्यमेतद्विक्रीते करिणि किमंकुशे विवादः ॥१२७॥ अतिपरिचयादवज्ञा सन्ततगमनादनादरो भवति। मलये भिल्लपुरन्ध्री चन्दनतरुकाष्ठमिन्धनं कुरुते ॥१२८॥ सुहृदि निरन्तरचित्ते गुणवति भृत्ये प्रियासु नारीषु। स्वामिनि शक्तिसमेते निवेद्य दुःखं जनः सुखी भवति॥१२९॥ अबला यत्र प्रबला बालो राजा निरक्षरो मन्त्री। नहि नहि तत्र धनाशा जीवित आशाऽपि दुर्लभा भवति ॥ १३० ॥ आपदि मित्रपरीक्षा शूरपरीक्षा रणाङ्गणे भाति। विनये वंशपरीक्षा स्त्रियः परीक्षा तु निर्धने पुंसि ॥ १३१ ॥ व्यस-नानि सन्ति बहुधा व्यसनद्वयमेव केवलं व्यसनम्। विद्या-ऽभ्यसनं व्यसनमथवा हरिपादसेवनं व्यसनम् ॥१३२॥ लङ्का-

पतेः संकुचितं यशो यद्यत्कीर्तिपात्रं रघुराजपुत्रः । स सर्व एवादिकवेः प्रभावो न कोपनीयाः कवयः क्षितीन्द्रैः॥१३३॥ गुणा दश स्नानपरस्य साधो रूपञ्च तेजश्च बलञ्च शौचम् । आयुष्यमारोग्यमलोलुपत्वं दुःस्वप्ननाशश्च यशश्च मेधा॥१३४॥ आत्मा नदी संयमपुण्यतीर्था सत्योदका शीलतटा दयोर्मिः । तत्राभिषेकं कुरु पाण्डुपुत्र न वारिणा शुद्ध्यति चान्तरात्मा ॥१३५॥ प्रज्ञावृद्धं धर्मवृद्धं स्वबन्धुं विद्यावृद्धं वयसा चापि वृद्धम्। कार्याकार्ये पूजयित्वा प्रसाद्य यः संपृच्छेन्न स मुह्येत्कदाचित् ॥१३६॥ विश्वं विलोक्याप्यखिलं तदीयकर्तारमीशं नहि मन्यते यः । अहं हि जातो जनकं विनेति न भाषते विज्ञवरः कथं सः ॥१३७॥ यो नोद्धतं कुरुते जातु वेषं न पौरुषेणापि विकत्थतेऽन्यान् । न मूर्छितः कटुकान्याह किञ्चित्प्रियं सदा तं कुरुते जनो हि ॥१३८॥ स्थाणुरयं भारहारः किलाऽभूदधीत्य वेदं न विजानाति योऽर्थम् । अर्थवित्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥१३९॥ यथा खरश्चन्दनभारवाही भारस्य वेत्ता न तु चन्दनस्य । एवं हि शास्त्राणि बहून्यधीत्य चार्थेषु मूढाः खरवद्वहन्ति ॥ १४० ॥ अनेकशास्त्रं बहु वेदितव्यमल्पश्च कालो बहवश्च विघ्नाः । यत्सारभूतं तदुपासितव्यं हंसो यथा क्षीरमिवाम्बुमध्यात् ॥ १४१ ॥ अर्थागमो नित्यमरोगिता च प्रिया च भार्या प्रियवादिनी च । वश्यश्च पुत्रोऽर्थकरी

च विद्या षड्जीवलोकस्य सुखानि राजन् ॥ १४२ ॥ आरोग्यमानृण्यमविप्रवासः सप्रत्ययावृत्तिरभीतवासः । सद्भिर्मनुष्यैः सह संप्रयोगः षड् जीवलोकस्य सुखानि राजन्॥१४३॥ प्रभुर्विवेकी धनवांश्च दाता विद्वान्विरागी प्रमदा सुशीला । तुरङ्गमः शस्त्रनिपातधीरो भूमण्डलस्याभरणानि पञ्च॥१४४॥ देशाटनं राजसभाप्रवेशो व्यापारिविद्वज्जनसङ्गतिश्च । सर्वेषु शास्त्रेष्ववलोकनञ्च चातुर्यमूलानि भवन्ति पञ्च ॥ १४५ ॥ स्वर्गच्युतानामिह भूमिलोके चत्वारि चिह्नानि वसन्ति देहे । दानप्रसङ्गो मधुरा च वाणी देवार्चनं पण्डिततर्पणञ्च॥१४६॥ नातिलोभो विनीतश्च दयादानरुचिर्मृदुः । प्रसन्नवदनश्चैव मनुष्यादागतो नरः ॥१४७॥ बह्वाशी नैव सन्तुष्टो मायावी च क्षुधाधिकः । स्वपन्मूढोऽलसश्चैव तिर्यग्योन्यागतो नरः॥१४८॥ विरोधिता बन्धुजनेषु नित्यं सरोगता मूर्खजनेषु सङ्गः । अतीवरोषी कटुका च वाणी नरस्य चिह्नं नरकागतस्य॥१४९॥ तद्भोजनं यन्मुनिभुक्तशेषं स बुद्धिमान्यो न करोति पापम् । तत्सौहृदं यत्क्रियते परोक्षं दम्भैर्विना यः क्रियते स धर्मः ॥१५०॥ बलोपपन्नोऽपि हि बुद्धिमान्नरः परं नयेन्न स्वयमेव वैरताम् । भिषङ्ममास्तीति विचिन्त्य भक्षयेदकारणात्कोपि विचक्षणो विषम् ॥ १५१ ॥ यथा चतुर्भिः कनकं परीक्ष्यते निघर्षणच्छेदनतापताडनैः । तथा चतुर्भिः पुरुषः परीक्ष्यते श्रुतेन शीलेन कुलेन कर्मणा ॥१५२॥ इयमुदरदरी दुरंतपूरा

यदि न भवेदभिमानभङ्गभूमिः । क्षणमपि न सहे भवादृशानां कुटिलकटाक्षनिरीक्षणं नृपाणाम् ॥१५३॥ अर्थी हसन्त्युचितदानविहीनलुब्धं भूम्यो हसन्ति मम भूमिरिति ब्रुवाणम् । जारा हसन्ति तनयानुपलालयन्तं मृत्युर्हसत्यवनिप रणरङ्गभीरुम् ॥ १५४ ॥ शक्तेनापि सता जनेन विदुषा कालान्तरप्रेक्षिणा वस्तव्यं खलुवज्रपातविषमे क्षुद्रेऽपि पापे जने । दर्वी व्यग्रकरेण धूममलिनेनायासयुक्तेन किं भीमेनातिबलेन मत्स्यभवनेऽपूपा न संघट्टिताः ॥१५५॥ सिद्धिं वाञ्छयता जनेन विदुषा तेजो निगृह्य स्वकं सत्वौत्साहमताऽपि दैवगतिषु स्थैर्यं प्रकार्यं क्रमात् । देवेन्द्रद्रुहिणोपमैर्बहुगुणैरभ्यर्थितो भ्रातृभिः किं क्लिष्टः सुचिरं विराटभवने पूर्वं न धर्मात्मजः ॥ १५६ ॥ एहि स्वागतमाविशासनमिदं कस्माच्चिराद्दृश्यसे का वार्ता परिदुर्बलोऽसि नितरां प्रीतोऽस्मि ते दर्शनात् । इत्येवं समुपागतं द्विजवरं सम्भावयन्त्यादराच्चेषां युक्तमशङ्कितेन मनसा गेहेषु गन्तुं सदा ॥ १५७ ॥ ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो ज्ञानस्योपशमः कुलस्य विनयो वित्तस्य पात्रे व्ययः । अक्रोधस्तपसः क्षमा बलवतां धर्मस्य निर्व्याजता सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥१५८॥ सिंहो व्याकरणस्य कर्तुरहरत्प्राणान्प्रियान्पाणिनेर्मीमांसाकृतमुन्ममाथ सहसा हस्ती मुनिं जैमिनिम् । छन्दोज्ञाननिधिं जघान मकरो वेलातटे पिङ्गलं अज्ञानावृतचेतसामतिरुषां कोऽर्थस्ति-

रश्वां गुणैः ॥१५९॥ छेदश्चन्दनचूतचम्पकवने रक्षाऽपि शाखोटके हिंसा हंसमयूरकोकिलकुले काकेषु नित्यादरः। मातङ्गेन खरक्रयः समतुला कर्पूरकार्पासयोः एषा यत्र विचारणा गुणिगणे देशाय तस्मै नमः ॥१६०॥

## नैयायिकवैयाकरणौ ४७ ॥

मोहं रुणद्धि विमलीकुरुते च बुद्धिं सूते च संस्कृतपदव्यवहारशक्तिम्। शास्त्रान्तराभ्यसनयोग्यतया युनक्ति तर्कश्रमो न तनुते किमिहोपकारम् ॥१॥ गुरोर्गिरः पञ्च दिनान्यधीत्य वेदान्तशास्त्राणि दिनत्रयं च। अमी समाघ्रातवितर्कवादाः समागताः फूंकटपादमिश्राः॥२॥ कर्मब्रह्मविचारणां विजहतो भोगापवर्गप्रदां घोषं कंचन कण्ठशोषफलकं कुर्वन्त्यमी तार्किकाः। प्रत्यक्षं न पुनाति नापहरते पापानि पीलुच्छटा व्याप्तिर्नावति नैव पात्यनुमितिर्नो पक्षता रक्षति ॥३॥ यद्यपि बहु नाधीषे तथापि पठ पुत्र व्याकरणम्। स्वजनः श्वजनो मा भूत्सकलं शकलं सकृच्छकृत् ॥४॥ शब्दशास्त्रमनधीत्य यः पुमान्वक्तुमिच्छति वचः सभान्तरे। बन्द्धुमिच्छति वने मदोत्कटं हस्तिनं कमलनालतन्तुना ॥५॥

## वैद्यकुवैद्यौ ४८ ॥

गुरोरधीताखिलवैद्यविद्यः पीयूषपाणिः कुशलः क्रियासु। गतस्पृहो धैर्यधरः कृपालुः शुद्धोऽधिकारी भिषगीदृशः स्यात् ॥ १ ॥ मस्ते दुःसहवेदनाकवलिते मग्ने स्वरेऽन्तर्गलं

तप्तायां ज्वरपावकेन च तनौ तान्ते हृषीकव्रजे । दूने बन्धुजने कृतप्रलपने धैर्यं विधातुं पुनः कः शक्तः कलितामयप्रशमनो वैद्यात्परो विद्यते ॥२॥ वैद्यराज नमस्तुभ्यं यमराजसहोदर । यमस्तु हरते प्राणान्वैद्यः प्राणधनानि च ॥३॥ चितां प्रज्वलितां दृष्ट्वा वैद्यो विस्मयमागतः । नाहं गतो न मे भ्राता कस्येदं हस्तलाघवम् ॥४॥ न धातोर्विज्ञानं न च परिचयो वैद्यकनये न रोगाणां तत्त्वावगतिरपि नो वस्तुगुणधीः । तथाप्येते वैद्या इति तरलयन्तो जडजनानसून्मृत्योर्भृत्या इव वसु हरन्ते गदजुषाम् ॥५॥

## सुपुत्रः ४६ ॥

प्रदोषे दीपकश्चन्द्रः प्रभाते दीपको रविः । त्रैलोक्ये दीपको धर्मः सुपुत्रः कुलदीपकः ॥ १ ॥ एकेनापि सुपुत्रेण विद्यायुक्तेन भासते । कुलं पुरुषसिंहेन चन्द्रेणेव हि शर्वरी ॥२॥ पुण्यस्थाने कृतं येन तपः क्वाप्यतिदुष्करम् । तस्य पुत्रो भवेद्वश्यः समृद्धो धार्मिकः सुधीः ॥३॥ एकेनापि सुपुत्रेण जायमानेन सत्कुलम् । शशिना चैव गगनं सर्वदैवोज्ज्वलीकृतम् ॥४॥ एकेनापि सुवृक्षेण पुष्पितेन सुगन्धिना । वासितं तद्वनं सर्वं सुपुत्रेण कुलं यथा ॥५॥ दुर्बलार्थं बलं यस्य धर्मार्थश्च परिग्रहः । वाक् सत्यवचनार्था च पिता तेनैव पुत्रवान् ॥६॥ पुन्नामनो नरकाद्यस्मात्त्रायते पितरं सुतः । तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा ॥७॥ प्रज्ञया वा प्रसारिण्या यो

बलेन धनेन वा । धुरं वहति गोत्रस्य जननी तेन पुत्रिणी ॥८॥ मृष्टं किं सुतवचनं मृष्टतरं किं तदेव सुतवचनम् । मृष्टान्मृष्टतमं किं श्रुतिपरिपक्कं तदेव सुतवचनम् ॥ ९ ॥ पात्रं न तापयति नैव मलं प्रसूते स्नेहं न संहरति नैव गुणान् क्षिणोति । द्रव्यावसानसमये चलतां न धत्ते सत्पुत्र एव कुलसद्मनि कोऽपि दीपः ॥१०॥

## कुपुत्रः ५० ॥

एकेनापि सुपुत्रेण सिंही स्वपिति निर्भयम् । दशभिः सह पुत्रैश्च भारं वहति रासभी ॥१॥ अविनीतः सुतो जातः कथं न दहनात्मकः । विनीतस्तु सुतो जातः कथं न पुरुषोत्तमः ॥२॥ यदि पुत्रः सुपुत्रः स्याद्व्यर्थो हि धनसञ्चयः । यदि पुत्रः कुपुत्रः स्याद्व्यर्थो हि धनसञ्चयः ॥ ३ ॥ एकेन शुष्कवृक्षेण दह्यमानेन वह्निना । दह्यते तद्वनं सर्वं दुष्पुत्रेण कुलं यथा ॥४॥ निरुत्साहं निरानन्दं निर्वीर्यमरिनन्दनम् । मा स्म सीमन्तिनी काचिज्जनयेत्पुत्रमीदृशम् ॥५॥ यस्य पुत्रो न वै विद्वान्न शूरो न च धार्मिकः । अप्रकाशं कुलं तस्य नष्टचन्द्रेव शर्वरी ॥६॥ किं तया क्रियते धेन्वा या न दोग्ध्री न गर्भिणी । कोऽर्थः पुत्रेण जातेन यो न विद्वान्न धार्मिकः ॥७॥ वरं न राज्यं न कुराजराज्यं वरं न रामा न कुरामरामा । वरं न पुत्रो न कुपुत्रपुत्रो वरं न शिष्यो न कुशिष्यशिष्यः ॥ ८ ॥ वरं गर्भस्रावो वरमृतुषु नैवाभिगमनं वरं जातः

प्रेतो वरमपि च कन्यैव जनिता । वरं वन्ध्या भार्या वरमपि च गर्भेषु वसतिर्न चाविद्वान् रूपद्रविणगुणयुक्तोऽपि तनयः ॥९॥ पित्रोर्नैव वचः शृणोति दिवसत्यागे व्रजत्यालयं यान्तीभिर्युवतीभिरध्वनि मुहुः कौतूहलं विन्दति । बन्धूना-मुपदेशवाचि वदति क्रोधैकतानं वचः साधून्निन्दति दुर्जनश्च मनुते मित्रं कुपुत्रो जनः ॥ १० ॥

## गोमाहात्म्यम् ५१ ॥

सदा गावः शुचयो विश्वधायसः । सदा देवा अरेपसः ॥ १ ॥ कीर्तनं श्रवणं दानं दर्शनश्चापि पार्थिव । गवां प्र-शस्यते वीर सर्वपापहरं शिवम् ॥ २ ॥ गावो लक्ष्म्याः सदा मूलं गोषु पाप्मा न विद्यते । गावो यज्ञस्य नेत्र्यो वै तथा यज्ञस्य ता मुखम् ॥ ३ ॥ अमृतं ह्यव्ययं दिव्यं क्षरन्ति च वहन्ति च । अमृतायतनाश्चैताः सर्वलोकनमस्कृताः ॥ ४ ॥ सायं प्रातश्च सततं होमकाले महाद्युते । गावो ददति वै हौम्यमृषिभ्यः पुरुषर्षभ ॥५॥ ऋते दधिघृतेनेह न यज्ञः संप्रवर्तते । तेन यज्ञस्य यज्ञत्वमतो मूलं च कथ्यते ॥६॥ दानानामपि सर्वेषां गवां दानं प्रशस्यते । गावः श्रेष्ठाः पवित्राश्च पावनं ह्येत-दुत्तमम् ॥ ७ ॥ पुष्ट्यर्थमेताः सेवेत शान्त्यर्थमपि चैव ह । पयो दधि घृतं चासां सर्वकष्टप्रमोचनम् ॥८॥ एतासां तनया-श्चापि कृषियोगमुपासते । जनयन्ति च धान्यानि बीजानि विविधानि च ॥९॥ वहन्ति विविधान् भारान् क्षुत्तृषा परि-

पीडिताः। गावो महार्थाः पुण्याश्च तारयन्ति च मानवान् ॥१०॥ मातरः सर्वभूतानां गावः सर्वसुखप्रदाः। सन्ताड्या न तु पादेन गवां मध्ये न च व्रजेत् ॥११॥ अमृतं वै गवां क्षीरमित्याह त्रिदशाधिपः। तस्माद्ददाति यो धेनुममृतं स प्रयच्छति ॥ १२ ॥ पितृसद्मानि सततं देवतायतनानि च। पूयन्ते शकृता यासां पूतं किमधिकन्ततः ॥ १३ ॥ यज्ञाङ्गं कथिता गावो यज्ञ एव च पाण्डव। एताभिश्च विना यज्ञो न वर्तेत कथञ्चन ॥ १४ ॥ गावो यज्ञस्य हि फलं गोषु यज्ञाः प्रतिष्ठिताः। मङ्गलायतनं देव्यस्तस्मात्पूज्याः सदैव हि ॥१५॥ गावः शरण्या भूतानामिति वेदविदो विदुः। तस्माद्ददाति यो धेनुं शरणं स प्रयच्छति ॥१६॥ यस्यैकापि गृहे नास्ति धेनुर्वत्सानुसारिणी। मङ्गलानि कुतस्तस्य कुतस्तस्य तमः-क्षयः ॥१७॥ न वधार्थं प्रदातव्या न कीनाशे न नास्तिके। गोजीविते न दातव्या तथा गौर्भरतर्षभ ॥१८॥ ब्राह्मणार्थे गवार्थे वा सद्यः प्राणान् परित्यजेत्। मुच्यते ब्रह्महत्याया गोप्ता गोब्राह्मणस्य च ॥ १९ ॥ गोभिस्तुल्यं न पश्यामि धनं किञ्चिदिहाच्युतम्। इत्येतद्गोषु मे प्रोक्तं माहात्म्यं भरतर्षभ ॥ २० ॥ यूयं गावो मेदयथा कृशंचिदश्रीरंचित् कृणुथा सुप्रतीकम्। भद्रं गृहं कृणुथ भद्रवाचो बृहद्वो वय उच्यते सभासु ॥ २१ ॥

# वैदिकेश्वरप्रार्थनादि ५२ ॥

ऋग्वेदे—ओ३म्—अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम् ॥ १ ॥ स नः पितेव सूनवेऽग्ने सूपायनो भव। सचस्वा नः स्वस्तये ॥ २ ॥ त्वां स्तोमा अवीवृधन् त्वामुक्था शतक्रतो। त्वां वर्धन्तु नो गिरः ॥ ३ ॥ सखाय आनिषीदत सविता स्तोम्यो नु नः। दाता राधांसि शुम्भति ॥४॥ वायवायाहि दर्शतेमे सोमा अरंकृताः। तेषां पाहि श्रुधी हवम् ॥५॥ तमित्सखित्व ईमहे तं राये तं सुवीर्ये। स शक्र उत नः शकदिन्द्रो वसु दयमानः ॥ ६ ॥ ऋजुनीति नो वरुणो मित्रो नयतु विद्वान्। अर्यमा देवैः सजोषाः ॥७॥ त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा। त्वं भद्रोऽसि क्रतुः ॥८॥ त्वं नः सोम विश्वतो रक्षा राजन्नघायतः। न रिष्येत्त्वावतः सखा ॥९॥ सोम गीर्भिष्ट्वा वयं वर्धयामो वचोविदः। सुमृडीको न आविश ॥ १० ॥ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम् ॥ ११ ॥ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते। विष्णोर्यत्परमं पदम् ॥१२॥ विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे। इन्द्रस्य युज्यः सखा ॥ १३ ॥ बलं धेहि तनुषु नो बलमिन्द्रानडुत्सु नः। बलं तोकाय तनयाय जीवसे त्वं हि बलदा असि ॥१४॥ सखायो ब्रह्मवाहसेऽर्चत प्र च गायत। स हि नः प्रमतिर्मही ॥१५॥ शृण्वन्तं पूषणं वयमिर्यमनष्टवेदसम्।

ईशानं राय ईमहे ॥ १६ ॥ इन्द्रं वर्धन्तो अप्तुरः कृण्वन्तो विश्वमार्यम् । अपघ्नन्तो अराव्णः ॥१७॥ सोमयास्ते मयोभुव ऊतयः सन्ति दाशुषे । ताभिर्नोऽविता भव ॥ १८ ॥ ओमासश्चर्षणीधृतो विश्वे देवास आगत । दाश्वांसो दाशुषः सुतम् ॥१९॥ देवो देवानामसि मित्रोऽद्भुतो वसुर्वसूनामसि चारुरध्वरे । शर्मन्त्स्याम तव सप्रथस्तमेऽग्ने सख्ये मारिषामा वयं तव ॥ २० ॥ ऊर्ध्वो नः पाह्यंहसो नि केतुना विश्वं समत्रिणं दह । कृधी न ऊर्ध्वाञ्चरथाय जीवसे विदा देवेषु नो दुवः ॥ २१ ॥ इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥ २२ ॥ त्वं विश्वस्य धनदा असि श्रुतो य ईं भवन्त्याजयः । तवायं विश्वः पुरुहूत पार्थिवोऽवस्युर्नाम भिक्षते ॥२३॥ अहं भूमिमददामार्यायाहं वृष्टिं दाशुषे मर्त्याय । अहमपो अनयं वावशाना मम देवासो अनुकेतमायन् ॥२४॥ अहं भुवं वसुनः पूर्व्यस्पतिरहं धनानि संजयामि शश्वतः । मां हवन्ते पितरं न जन्तवोऽहं दाशुषे विभजामि भोजनम् ॥ २५ ॥

यजुर्वेदे—नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे । अन्याँस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳशिवो भव ॥२६॥ नमस्ते अस्तु विद्युते नमस्ते स्तनयित्नवे । नमस्ते भगवन्नस्तु यतः स्वः समीहसे ॥ २७ ॥ यतो यतः समी-

हसे ततो नोऽअभयं कुरु । शं नः कुरु प्रजाभ्योऽभयं नः पशुभ्यः ॥ २८ ॥ विश्वानि देव सवितर्दुरितानि परासुव । यद्भद्रं तन्न आसुव ॥ २९ ॥ रुचं नो धेहि ब्राह्मणेषु रुचꣳ राजसु नस्कृधि । रुचं विश्येषु शूद्रेषु मयि धेहि रुचा रुचम् ॥३०॥ तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः । तदेव शुक्रं तद्ब्रह्म ता आपः स प्रजापतिः ॥३१॥ यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति । दूरङ्गमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसंकल्पमस्तु ॥३२॥ तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे । छन्दाꣳसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥३३॥ न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव । नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ॥३४॥ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥ ३५ ॥ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥३६॥ य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः । यस्य छायाऽमृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥३७॥ यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव । य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥ ३८ ॥ तनूपाऽअग्नेऽसि तन्वं मे पाहि । आयुर्दा अग्ने अस्यायुर्मेदेहि । वर्चोदा

अग्नेऽसि वर्चो मे देहि । अग्ने यन्मे तन्वा ऊनं तन्म आपृण
॥ ३९ ॥ यन्मे छिद्रं चक्षुषो हृदयस्य मनसो वाऽतितृणं बृह-
स्पतिर्मे तद्दधातु । शं नो भवतु भुवनस्य यस्पतिः ॥ ४० ॥
स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा ।
यत्र देवा अमृतमानशानास्तृतीये धामन्नध्यैरयन्त ॥ ४१ ॥
दृते दृꣳह मा मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्ष-
न्ताम् । मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे । मित्रस्य
चक्षुषा समीक्षामहे ॥४२॥ यो नः पिता जनिता यो विधाता
धामानि वेद भुवनानि विश्वा । यो देवानां नामधा एक एव
तꣳसंप्रश्नं भुवना यन्त्यन्या ॥४३॥ तदेजति तन्नैजति तद्दूरे
तद्वन्तिके । तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः॥४४॥
स पर्य्यगाच्छुक्रमकायमव्रणमस्नाविरꣳशुद्धमपापविद्धम् ।
कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छा
श्वतीभ्यः समाभ्यः ॥ ४५ ॥ अग्ने नय सुपथा राये अस्मा-
न्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो
भूयिष्ठां ते नम उक्तिं विधेम ॥४६॥ इन्द्रो विश्वस्य राजति ।
शं नो अस्तु द्विपदे शं चतुष्पदे ॥ ४७ ॥ यां मेधां देवगणाः
पितरश्चोपासते । तया मामद्य मेधयाऽग्ने मेधाविनं कुरु स्वाहा
॥ ४८ ॥ मेधां मे वरुणो ददातु मेधामग्निः प्रजापतिः । मेधा-
मिन्द्रश्च वायुश्च मेधां धाता ददातु मे स्वाहा ॥ ४९ ॥ इदं
मे ब्रह्म च क्षत्रञ्चोभे श्रियमश्नुताम् । मयि देवा दधतु श्रिय-
मुत्तमां तस्यै ते स्वाहा ॥ ५० ॥

सामवेदे—अग्न आयाहि वीतये गृणानो हव्यादातये। निहोता सत्सि बर्हिषि ॥५१॥ नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः। अमैरमित्रमर्दय ॥५२॥ कविमग्निमुपस्तुहि सत्यधर्माणमध्वरे। देवममीवचातनम् ॥५३॥ आत्वेता निषीदतेन्द्रमभि प्रगायत। सखायः स्तोमवाहसः ॥५४॥ नकि इन्द्र त्वदुत्तरं न ज्यायो अस्ति वृत्रहन्। नक्येव यथा त्वम् ॥५५॥ अर्चत प्रार्चता नरः प्रियमेधासो अर्चत। अर्चन्तु पुत्रका उत पुरमिद्धृष्ण्वर्चत ॥५६॥ त्वामिन्द्राभिभूरसि त्वꣳसूर्यमरोचयः। विश्वकर्मा विश्वदेवो महानसि ॥५७॥ त्वं हि नः पिता वसो त्वं माता शतक्रतो बभूविथ। अथा ते सुम्नमीमहे ॥५८॥ इन्द्रमीशानमोजसाऽभिस्तोमैरनूषत। सहस्रं यस्य रातय उत वा सन्ति भूयसीः ॥५९॥ त्वं जामिर्जनानामग्ने मित्रो असि प्रियः। सखा सखिभ्य ईड्यः ॥६०॥ प्र सो अग्ने तवोतिभिः सुवीराभिस्तरति वाजकर्मभिः। यस्य त्वं सख्यमाविथ ॥६१॥ भद्रं भद्रं न आभरेषमूर्जꣳशतक्रतो। यदिन्द्र मृडयासि नः ॥६२॥ आत्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः। न त्वामिन्द्रातिरिच्यते ॥६३॥ यत इन्द्र भयामहे ततो नो अभयं कृधि। मघवञ्छग्धि तव तं न ऊतये विद्विषो विमृधो जहि ॥६४॥ गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः। ब्रह्माणस्त्वा शतक्रत उद्वꣳशमिव येमिरे ॥६५॥ इन्द्राय साम गायत विप्राय बृहते बृहत्। ब्रह्मकृते विपश्चिते

पनस्यवे ॥६६॥ उप नः सूनवो गिरः शृण्वन्त्वमृतस्य ये । सुमृडीका भवन्तु नः ॥६७॥ विश्वतो दावन्विश्वतो न आभर । यं त्वा शविष्ठमीमहे ॥ ६८ ॥ इच्छन्ति देवाः सुन्वन्तं न स्वप्नाय स्पृहयन्ति । यन्ति प्रमादमतन्द्राः ॥ ६९ ॥ उत वात पिताऽसि न उत भ्रातोत नः सखा । स नो जीवातवे कृधि ॥ ७० ॥ शिक्षेयमस्मै दित्सेयꣳशचीपते मनीषिणे । यदहं गोपतिः स्याम् ॥ ७१ ॥ विभ्राजज्ज्योतिषा स्वाऽ३ऽरगच्छो रोचनं दिवः। देवास्त इन्द्र सख्याय येमिरे ॥७२॥ अद्याऽ-द्या श्वःश्व इन्द्र त्रास्व परे च नः। विश्वा च नो जरितॄन्त्स-त्पते अहा दिवा नक्तञ्च रक्षिषः ॥७३॥ सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः। जनिताऽग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः ॥ ७४ ॥ यो जागार तमृचः कामयन्ते यो जागार तमु सामानि यन्ति । यो जागार तमयꣳसोम आह तवाहमस्मि सख्ये न्योकः ॥७५॥

अथर्ववेदे—यो भूतञ्च भव्यञ्च सर्वं यश्चाधितिष्ठति । स्वर्यस्य च केवलं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥ ७६ ॥ पुनरेहि वाचस्पते देवेन मनसा सह । वसोष्पते निरमय मय्येवास्तु मयि श्रुतम् ॥७७॥ प्रियं मा कृणु देवेषु प्रियं राजसु मा कृणु । प्रियं सर्वस्य पश्यत उत शूद्र उतार्ये ॥७८॥ इन्द्रश्च मृडयाति नो न नः पश्चादघं नशत् । भद्रं भवाति नः पुरः ॥७९॥ पूषन् तव व्रते वयं न रिष्येम कदाचन। स्तोतारस्त इह स्मसि

॥८०॥ प्राणाय नमो यस्य सर्वमिदं वशे । यो भूतः सर्व-
स्येश्वरो यस्मिन्सर्वं प्रतिष्ठितम् ॥८१॥ प्राणः प्रजा अनुवसते
पिता पुत्रमिव प्रियम् । प्राणो ह सर्वस्येश्वरो यच्च प्राणति यच्च
न ॥ ८२ ॥ प्राणो विराट् प्राणो देष्ट्री प्राणं सर्व उपासते ।
प्राणो ह सूर्यश्चन्द्रमाः प्राणमाहुः प्रजापतिम् ॥ ८३ ॥
शास इत्था महानसि अमित्रखादो अद्भुतः । न यस्य हन्यते
सखा न जीयते कदाचन ॥८४॥ भद्राहं नो मध्यन्दिने भद्राहं
सायमस्तु नः । भद्राहं नो अह्नां प्राता रात्री भद्राहमस्तु नः ।८५।
शान्ता द्यौः शान्ता पृथिवी शान्तमिदमुर्वऽन्तरिक्षम् । शान्ता
उदन्वतीरापः शान्ता नः सन्त्वोषधीः ॥ ८६ ॥ यतः सूर्य
उदेत्यस्तं यत्र च गच्छति । तदेव मन्येऽहं ज्येष्ठं तदु ना-
त्येति किंचन ॥ ८७ ॥ उच्छिष्टे नाम रूपं चोच्छिष्टे लोक
आहितः । उच्छिष्ट इन्द्रश्चाग्निश्च विश्वमन्तः समाहितम्॥८८॥
उच्छिष्टे द्यावा पृथिवी विश्वं भूतं समाहितम् । आपः समुद्र
उच्छिष्टे चन्द्रमा वात आहितः ॥८९॥ यच्च प्राणति प्राणेन
यच्च पश्यति चक्षुषा । उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिवि-
श्रिताः ॥ ९० ॥ देवाः पितरो मनुष्या गन्धर्वाप्सरसश्च ये ।
उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिविश्रिताः ॥९१॥ अहमेव
स्वयमिदं वदामि जुष्टं देवानामुत मानुषाणाम् । यं कामये
तन्तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥ ९२ ॥
बृहन्नेषामधिष्ठाता अन्तिकादिव पश्यति । यस्तायन्मन्यते

चरन्सर्वं देवा इदं विदुः ॥९३॥ यस्तिष्ठति चरति यश्च वञ्चति यो निलायं चरति यः प्रतङ्कम् । द्वौ संनिषद्य यन्मन्त्रयेते राजा तद्वेद वरुणस्तृतीयः ॥ ९४ ॥ उतेयं भूमिर्वरुणस्य राज्ञ उतासौ द्यौर्बृहती दूरे अन्ता । उतो समुद्रौ वरुणस्य कुक्षी उतास्मिन्नल्प उदके निलीनः ॥ ९५ ॥ उत यो द्यामतिसर्पात् परस्तान्न स मुच्यातै वरुणस्य राज्ञः । दिवस्पशः प्रचरन्तीदमस्य सहस्राक्षा अतिपश्यन्ति भूमिम् ॥ ९६ ॥ सर्वं तद्राजा वरुणो विचष्टे यदन्तरा रोदसी यत्परस्तात् । संख्याता अस्य निमिषो जनानामक्षानिव श्वघ्नी निमिनोति तानि ॥ ९७ ॥ अकामो धीरो अमृतः स्वयम्भू रसेन तृप्तो न कुतश्चनोनः । तमेव विद्वान्न बिभाय मृत्योरात्मानं धीरमजरं युवानम् ॥ ९८ ॥ धाता दधातु नो रयिमीशानो जगतस्पतिः । स नः पूर्णेन यच्छतु ॥ ९९ ॥ यो अग्नौ रुद्रो यो अप्स्वन्तर्य ओषधीर्वीरुध आविवेश । य इमा विश्वा भुवनानि चाक्लृपे तस्मै रुद्राय नमो अस्त्वग्नये ॥ १०० ॥ ओ३म्— द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्वꣳ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥ ओं शान्तिः । शान्तिः । शान्तिः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य स्वामी
अच्युतानन्द सरस्वतीतिनामधेयैः संगृहीता
व्याख्यानमाला समाप्ता ।

# शुद्धिपत्रम्

| पृष्ठ | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | १५ | अप्राणा | अप्राणो |
| ८ | २१ | तद्रिन्त. | तन्द्रित. |
| ११ | १७ | लक्ष्मणन | लक्ष्मणेन |
| १३ | १ | धमा | धर्मौ |
| १६ | ४ | पराधि० | मपराधि० |
| १८ | १८ | य प्रश्नं | यः प्रश्नं |
| २० | १ | पङ्क्या० | पङ्क्त्या० |
| २८ | ३ | य | यः |
| ३० | ८ | अनर्था. | अनर्थौ. |
| ३३ | १८ | यस्तु | यैस्तु |
| ४६ | १६ | च्छेत्त | च्छेत्तु |
| ५१ | १ | क्षयं | क्षणं |
| ५२ | १७ | पूज्य. | पूज्या. |
| ५३ | ५ | शूद्रो. | शूद्रा० |
| ५४ | १८ | शुश्र. | शुश्रु. |
| ५५ | ८ | श्नुते. | मश्नुते. |
| ६८ | १ | ने | न |
| ७२ | २० | क्षान्त्ये | क्षान्त्यै |
| ९५ | ७ | सज्जना | सज्ज्ञाना |
| १०३ | ७ | गुरूनापि | गुरूनपि |
| १०३ | १५ | वैश्या | वेश्या |

| पृष्ठ | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ११३ | १७ | दुर्गति | दुर्मति |
| ११५ | २ | भुचि' | मुचि |
| ११५ | १६ | भङ्गगर्त० | गर्तेभङ्ग |
| १२२ | ९ | प्रासाद० | प्रसाद् |
| १२२ | २० | अद्यव० | अद्यैव |
| १३० | १२ | कर्त्तच्यः | कर्तव्यः |
| १३१ | २० | देवं | दैवं |
| १३२ | ३ | देवं | दवं |
| १४१ | २१ | दान्त० | दान्ता० |
| १४३ | १५ | पैय० | पयै० |
| १५३ | ११ | कथय० | कथन्तु |
| १५५ | १५ | पाज्ञानं० | ज्ञानं |
| १५६ | १० | नास्त | नास्ती |
| १६५ | १४ | जीवि० | र्जीवि० |
| १८० | ६ | चिन्त्य | चिन्तय |
| १८१ | १२ | पूर्वा | पूर्व |
| १९१ | १० | बहु० | बंहु० |
| १९३ | १२ | एकनो | एकना |
| १९३ | २० | ज्ञामनो | नाम्नो |
| १९८ | ५ | दवासः | देवासः |

# आर्य प्रादेशिक प्रतिनिधि सभा पंजाब, सिन्ध, बलोचिस्तान द्वारा प्रकाशित पुस्तकें ।

१ वैदिक सूक्तिः—महता रामचन्द्र जी शास्त्री महोपदेशक सभा ने चारों वेदों में से सूक्तियां निकाल कर एकत्रित की हैं। अंग्रेज़ी तथा हिन्दी में उन का अर्थ भी किया गया है। मूल्य विना जिल्द ॥।) है और सुनहरी जिल्द १।) है

२ हमारा शिक्षाकार्यः—(अंग्रेज़ी) लेखक श्री प्रोफेसर श्रीराम जी एम० ए० । मूल्य ।=)

३ Life Ever Lasting (अंग्रेज़ी)ः—लेखकः—लाला दीवान चन्द जी एम० ए० प्रिंसीपल दयानन्द कालिज कानपुर। आत्मा के नित्यत्व पर विवेक पूर्ण चर्चा की गई है। पुस्तक का मूल्य ॥) है परन्तु सभा ।) में देती है ।

४ स्वामी दयानन्द सरस्वतीः—( अंग्रेज़ी ) लेखक पण्डित ऋषि राम जी बी० ए० । इस में ऋषि दयानन्द के सम्बन्ध में महापुरुषों की सम्मतियां हैं । मूल्य ॥=)

४ पतितों की शुद्धि सनातन हैः—लेखक महता राम चन्द्र जी शास्त्री महोपदेशक सभा। श्रुति, स्मृति और पुराणादि तथा इतिहास के प्रमाणों से शुद्धि का समर्थन किया गया है। मूल्य ।=)

५ स्वामी दयानन्द के पत्रः—(तीसरा भाग) यह पत्र अभी तक कहीं नहीं छपे। सभा ने पहिली वार छपवाए हैं। मूल्य ।=)

सभा ने शुद्धि पत्र भी छपवाये हैं । २५ का मूल्य ॥), ५० का मूल्य १) और १०० का मूल्य २) है ।

पत्र व्यवहार का पताः—

मंत्री आर्य प्रादेशिक प्रतिनिधि सभा लाहौर ।